कमला पुस्तकमालायाः प्रथमं प्रसूनम्

म० म० श्री भट्टोजी दीक्षितविरचिता

# प्रौढमनोरमा

तत्पौत्र म० म० श्रीहरिदीक्षित रचित—
लघुशब्दरत्न व्याख्यया विभूषिता

---

काशीस्थ श्रीस्याद्वाददिगम्बरजैन महाविद्यालयीय व्याकरणप्रधानाध्यापक
व्याकरणाचार्य श्रीदिवाकर शास्त्रि जोशी कृतया
मनोरमाशब्दरत्नतत्त्वादर्शाख्यया
व्याख्ययासमलंकृता

तत्त्वादर्शकृतैव भूमिकादिभिः संयोज्य
संशोध्य च सम्पादिता

---

प्रथमं संस्करणम् ] संवत् २००८ [ मूल्यम् २॥)

पूज्य गुरुचरणाः



पं० श्री ६ गोपालभट्टभट्ट न्यायाचार्याः

# समर्पणम्

श्रीसाङ्गवेदविद्यालये यदध्यापकत्ववैदग्धी ।
विद्यार्थिनः समस्तांश्चकार मुग्धान्निरस्तसन्देहान् ॥ १ ॥

'न्यायाचार्यो'पाधिं भूषितवन्तोऽप्यशेषशास्त्रज्ञाः ।
प्रायः सकलं समयं विदग्धवार्तासु ये नयन्तिस्म ॥ २ ॥

नैयायिकप्रवीणैर्वैयाकरणेष्वग्रगणनैयैः ।
सदयं सुतनिरतिशयं छात्रोऽयं शब्दशास्त्रमध्यापि ॥ ३ ॥

प्रथमपदार्च्ये विद्वद्विख्याते 'भट्टभट्ट' वंशेऽभूत् ।
येषां जन्म पवित्रं कथमभिवाद्या न ते गुरवः ? ॥ ४ ॥

'गोपालभट्टभट्टाः' श्रीहेमन्तः स्वर्गताः स्मृताः सन्तः ।
कृपयाऽङ्गीकुर्वन्तु च्छात्रदिवाकर कृतामिमां रचनाम् ॥ ५ ॥



# सम्मतयः

Principal
GOVT. ŚANSKRIT COLLEGE
BANARAS.

I have seen the आदर्श commentary on शब्दरत्न by Pt. Diwakar Joshi, Vyakarana Pradhana Adhyapak of the Syadvada Jain Mahavidyalaya. It is a very lucid commentary on a work noted for its difficulty. The scholarship and expressive power of this scholar can be seen in this commentary. He has already had 10 years teaching experience. He has passed out from the Government Sanskrit College and has held a Post-Graduate Scholarship also. He gives me the impression of being a very good scholar of Vyakarana. I wish him success.

K. A. Subramania Iyer

Office of the Registrar,

GOVERNMENT SANSKRIT COLLEGE EXAMINATIONS

UTTAR PRADESH, BANARAS.

I have read with great pleasure some portion of तत्त्वादर्श, a commentary on शब्दरत्न, by Sri Diwakar Shastri Joshi. Sri Joshi has fully utilized all the existing commentaries on शब्दरत्न and also compiled relevant portions from SHABDENDU-SHEKHAR, MAHA-BHASHYA, SHABDAKAUSTUBHA, TATVA-BODHINI etc. so that the meaning of this difficult work could be understood. It can safely be said that he has succeeded to a great extent in his efforts. On occasions he has clearly analysed the various principles and theories profounded by the old and new schools of vaikaranas and also established the सिद्धान्तपक्ष with a critical and thorough examination of all the facts concerned. This, indeed, is a very useful achievement.

TATTVADARSHA (तत्त्वादर्श) is a valuable commentary on SHABDARATNA and I am confident that the students and teachers of Vyakarana will be highly benefitted by it.

( K. N. Shukla )

M. A., Vyakaranacharya,

Registrar,

Government Sanskrit College Exams.

Uttar Pradesh, BANARAS

विश्वविश्रुते पाणिनीयव्याकरणे प्रौढतमे ग्रन्थरत्ने मनोरमा-शब्दरत्ने को नाव-गच्छति व्याकृतिपारदृश्वतामधिजिगमिषुः। ग्रन्थग्रन्थिबहुले टीकारत्ने नूत्नचिरत्न विचारसंचारचतुरस्रे काशिकविद्वद्धौरेयानल्पकल्पनोपबृंहिते कान्तार इव महागहनेऽत्र शब्दरत्नेऽन्तेवासिनस्तु दवीयस्त्वमासादयन्त्येव, मनीषिणोऽपि साहसिकभूयं परिजहति। विचार्यकाठिन्यमिदं विदुषांवरेण श्रीदिवाकरशास्त्रिजोशीमहाशयेन महताऽऽयासेन गुरुकुलोपासनावाप्तदिव्यदृशा तत्त्वादर्शाभिधेयं व्याख्यानकौशलं समुदटङ्कि। अत्र किल विषमभूमिषु प्राचीनार्वाचीनयोर्मतविमर्शः, समाश्रयन्तीषु निगूढतां मूलस्थलीषु वैशद्यं, छात्राणां बम्भ्रम्यमाणानां रहस्यवगाहनक्षमपारिपाट्यं, समुपयोगिचेतरत्सर्वं तथानिभालितं, यथाऽचिरादेव प्रकाशितायां व्याख्यायामस्यां चन्द्रिकायामिव विषयस्फूर्तयोऽधीयानानामधिकारिणां भवितार इति नितरां प्रसीदताऽत्र मया गुणग्राहिषु प्रचयमेतदीयं कामयमानेन विश्वेश्वरो मुहुर्मुहुः प्रार्थ्यते यद्ग्रन्थितुर्व्याख्यामिमां सर्वाण्यभीष्टानि पूरयतुतमामिति।

हिन्दूविश्वविद्यालयीय साहित्यविभागाध्यक्षेण सर्वतन्त्रस्वतन्त्र
कवितार्किकचक्रवर्तिना पं० महादेवपाण्डेयेन

श्री पण्डित 'जोशी' इत्युपनामक दिवाकरशास्त्रिणा व्याकरणाचार्येण विरचितोऽयं तत्त्वादर्शनामा निबन्धः पञ्चसन्ध्यन्तआपाततो मयाऽवलोकितः। निबन्धोऽयं मनोरमाव्याख्यानशब्दरत्नस्य भावपूर्णो व्याख्यानरूपोऽतिसमीचीनो बालानामपि सुलभः प्राङ्नव्यमतप्रतिपादको वैयाकरणानां छात्राणां कृतेत्ववश्यमुपादेय इति संमनुते—

—पं० गोपालशास्त्री नेने व्या० आ०
भूतपूर्व काशिक रा० सं० का० व्याकरणशास्त्र प्रधानाध्यापकः

श्रीमद्भिर्व्याकरणाचार्यैः सरयूपारीणकुलभूषणानां न्याय-व्याकरणाचार्य पण्डित सूर्यनारायणशुक्लानामन्तेवासिभिर्जोशीत्युपनामकैर्दिवाकरशर्मभिः स्वकृतविशदव्याख्यानरूपेण तत्त्वादर्शनामकेन सह प्रकाशितं शब्दरत्नग्रन्थं वीक्ष्य नितान्तं प्रमुदितमनास्तं शतशोधन्यवादैरभिनन्दामि। भट्टोजीदीक्षित कृत कौमुदीव्याख्यानरूपमनोरमायाष्टीकारूपः शब्दरत्नग्रन्थश्चात्यन्तं दुरूह इति पटनपाठनादिना परिशीलयद्भिः शाब्दिकैर्नाविदितम्। याश्च भैरवी भावप्रकाशाद्यभिधास्तट्टीकास्ता अपि तथैवेति विचार्य व्याख्यात्रा सौकर्येण बोधाय ताभ्यएव सारमादाय सरलयारीत्या यथाश्रुतार्थलापनेन तत्त्वं प्रकाश्य तत्र तत्र च दुर्बोधार्थानां सुखबोधाय शेखरादि ग्रन्थव्याख्यानतोपि परिष्कारांश्च संगृह्य प्रतिबिम्बिततत्त्वकं तत्त्वादर्श इति नामकं यथार्थनामेतिव्याख्यानं विधाय विशेषतः परीक्षांदित्सूनामाधुनिकानां छात्राणां महान् उपकारः कृत इति मे दृढो विश्वास इति।

—पं० गणपति शास्त्री मोकाटे व्या० आ०
भूतपूर्व काशिक रा० सं० का० व्याकरणशास्त्र प्रधानाध्यापकः

श्रीजोशीकुलोत्पन्नैर्व्याकरणाचार्य पण्डित श्रीदिवाकरशास्त्रिभिः प्रणीतो मनोरमा-शब्दरत्न-तत्त्वादर्शो ग्रन्थो मया सम्यक्तया सम्पूर्णोऽवलोकितः। तत्र तत्र कठिनस्थलेपुच्छात्राणां सुलभरीत्या ज्ञानं भवत्वितीच्छया बहुप्रयतितं शास्त्रिमहोदयैः। मध्यमां समुत्तीर्य नव्यव्याकरणशास्त्रिकक्षायां प्रविष्टानां छात्राणां कृतेऽस्यैवैतादृशस्यातिसरलस्य मनोरमा-शब्दरत्न टीका ग्रन्थस्यापेक्षा। साचानेन सर्वथा परिपूरितास्यादितिमन्ये। अन्ते च श्रीपार्वतिपतिं विश्वनाथं प्रार्थये सर्वथाऽऽयुरारोग्यप्रदानेनानुगृह्णात्वेनानिति—

पं० श्री अनन्तशास्त्री फड़के व्याकरणाचार्य
प्रो० ग० सं० का० काशी

# प्रस्तावना

अथायं प्रकाश्यते तत्त्वादर्शः। अस्याधारभूतः प्रसिद्धविदुषा श्रीभट्टोजीदीक्षित-पौत्रेण नागेशगुरुणा श्रीहरिदीक्षितेन विरचितो मनोरमाटीकारूपोऽतिप्रसिद्धो लघुशब्द-रत्नः। संस्कृतसाहित्यसागरे प्रविविक्षूणां कृते व्याकरणं, सागरे तरणिरिवातीवोपयोगीति सुप्रथितमिदं सर्वजनेषु। अतः शिक्षाकारेण "मुखं व्याकरणं स्मृतमिति" मुख्य-त्वाद्व्याकरणस्य मुखरूपत्वेन कृतं वर्णनं समीचीनं प्रतिभाति। ऐन्द्रचान्द्रादि-व्याकरणादिषु सत्स्वपि सकलवैदिकलौकिकशब्दसाधुत्वबोधकत्वेन श्रीपाणिनिमुनि विरचितं व्याकरणमेव राजानतीति सर्वदा सर्वविद्भिः सर्वभावेनेदमादृतं दृश्यते।

सन्ति पाणिनिमुनेः पूर्वमपि बहूनि व्याकरणानि, यतः श्रीमता मुनिना पाणिनिना स्वीयसूत्रेषु प्रायोवैयाकरणानां दशनामानि गृहीतान्युपलभ्यन्ते। यथा—चाक्रवर्मणस्य (६, १; १३), भारद्वाजस्य (७, २, ६३), काश्यपस्य (८, ४, ६७), आपिशलेः (६, १, ९२), गार्ग्यस्य (८, ३, ७१), गालवस्य (६, ३, ६१), शाकटायनस्य (३, ४, १११), शाकल्यस्य (१, १, १६), सेनकस्य (५, ४, ११२), स्फोटायनस्य (६, १, १२३), चेति। श्रीचाक्रवर्मणप्रभृतिभिर्निर्मितानां व्याकरणानां स्वरूपं कीदृशमासीदितिस्वल्पेनापिप्रकारेणाधुना किमपि ज्ञातुं न शक्यते। संप्रति तेषां सर्वथा विलुप्तत्वात्। अधुनोपलभ्यमानानि शाकटायनप्रभृतिरचितानि व्याकरणानि न पाणिनिनिर्दिष्टशाकटायनादिमुनिप्रणीतानि। यतः तत्कर्ता शाकटायन "ईशवीय पञ्चमशतके जात इति" इतिहासविद्भिर्निश्चितम्। केचन शाकटायनस्य नामान्तरं पाल्यकीर्तिरित्यासीत्, वादराज सूरिकृत पार्श्वनाथ चरिते—

कुतस्त्या तस्य सा शक्तिः पाल्यकीर्तेर्महौजसः।
श्रीपदश्रवणं यस्य शाब्दिकान्कुरुते जनान्॥

अत्र श्लोके पाल्यकीर्तिनाम्नएव शाकटायनस्योल्लेखः कृत उपलभ्यते, अनेन सूत्रोपरि स्वोपज्ञामोघवृत्तिः रचिता, राष्ट्रकूटाधिपममोघवर्षं लक्ष्यीकृत्यैव तन्नाम्नेयं वृत्तिरलेखि। यतो हि भूपोऽमोघवर्षः जैनविदुषामाश्रयप्रदाताऽऽसीत्, भगवन्तं

जिनसेनश्च गुरुत्वेनामंस्त। अन्ते च जैनधर्मविवेकेनैव राज्यमत्यजत्। अयं शाकटायनः यापनीयसम्प्रदायानुसारी, नन्दिसूत्रस्य टीकायां १३ शतकप्रादुर्भूतैः मलयगिरिनामकैः श्वेताम्बराचार्यैः यापनीयाग्रणीत्वेनोल्लिखितः। किञ्च 'अदहदमोघवर्षोऽरातीन्' इत्युदाहरणे शक संवत् ८३२ शिलालेखे च 'भूपालान् कण्टकाभान् वेष्टयित्वा ददाह सः, अत्र लिट् लकार प्रयोगदर्शनेनोदाहरणे च लङ् लकार-प्रयोगदर्शनेन स्पष्टमेवैतत्, यदमोघवर्षस्य विजयः शाकटायनस्य समक्षमेवाभूदिति वदन्ति। शाकटायनसूत्रेषु विद्वद्भिरनेके ग्रन्थालिखिता इति ज्ञायते। यथा—अभयचन्द्रेण—शाकटायनप्रक्रियासंग्रहः। प्रभाचन्द्राचार्येण—न्यासः। यक्षवर्माचार्येण—चिन्तामणिः। अजितसेनाचार्येण—मणिप्रकाशिका। परम्। तेषां व्याकरणानां विलोपस्य मुख्यतमं कारणं श्रीमतः पाणिनेर्व्याकरणस्य सर्वाङ्ग-सुन्दरत्वं सम्पूर्णत्वं चेति। अस्तु। अत्रप्रसङ्गतोयावच्छक्यं पाणिनिव्याकरणे ग्रन्थ-काराणां चरितान्यतिसंक्षेपतया व्याकरणे कृतपरिश्रमाणां छात्राणां ज्ञानाय विदुषां च प्रमोदाय लिख्यन्ते—

**पाणिनिः**—श्रीपिङ्गलः पाणिनिसहोदर इति प्रसिद्धम्। श्रीजनमेजयसर्पसत्रे श्रीपिङ्गलस्य स्थितेर्भारतेवर्णितत्वेन जनमेजयसमकालिकः श्रीपाणिनिमुनिरिति सिद्ध्यतीति विदुषां सिद्धान्तः। एवं च पाणिनेः समय ईसातः पूर्वं सप्तशतकमिति-निर्णीतम्। अयं शालातुरग्रामे श्रीमतः पणिऋषेः कुले दाक्ष्याः सकाशाज्जातः। अस्य गुरुः श्रीवर्षनामक आसीत्।

**व्याडिः**—अयं दक्षकुले जातः पाणिनेर्मातुलपुत्रो लक्षश्लोकात्मकसंग्रहग्रन्थस्य कर्ता, अस्य विषये भाष्यकारेण "शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः इत्युक्तम्। प्रायोऽयं पाणिनि समकालएव। केचन ईसातः पूर्वं ३५० मितकाले जात इतिकथयन्ति। अनेन परिभाषासु वृत्तिरपि लिखिता।

**वररुचिः**—"अयं प्रायः ईसातः ३७० वर्षमिते कालआसीत्"। अनेन वाररुचसंग्रहोनाम सूत्रवार्तिकवृत्तिर्लिखितेति कथयन्ति। कात्यायनेनसहास्याभेद मपि वर्णयन्ति। अयमुणादिसूत्राणां कर्तेति विमलसरस्वती लेखतोज्ञायते।

**कात्यायनः**—अयं ईसातः पूर्वं चतुर्थशतके जातो यमुनातटवर्ति प्रयागात्पश्चिमदिशि विद्यमाने कौशाम्बी नगरे इति केचन कथयन्ति। अपरे "प्रिय-

तद्धितादाक्षिणात्या इति वार्तिककारमुद्दिश्य भाष्यकारनिर्देशदर्शनाद्दाक्षिणात्यइति कथयन्ति । भाष्येऽन्येषां सौनाभ—भारद्वाजीय-कुणिप्रभृतिवार्तिककाराणां निर्देशेन-कात्यायनाद्भिन्नः कश्चिद्दाक्षिणात्यो वार्तिककारः स्यादित्यपि संभाव्यते ।

पतञ्जलिः—अनेन श्रीव्याडिविरचितसंग्रहग्रन्थाधारेण श्रीपाणिनिमुनिसूत्रेषु भाष्यं विरचितम् । अयं "पुष्यमित्रसभा" इत्यादिलेखेन, इह पुष्यमित्रंयाजयामः" इत्यनेन च ईसातः पूर्वं १५० वर्षमिते समये जात इति निश्चीयते । उज्जयिनी-विदिशामध्यवर्ति गोनर्दनगरे स्थितः । अस्य मातुर्नाम "गोणिका" इति । श्रीभर्तृहरिणा महाभाष्यमुद्दिश्य लिखितं "संग्रहप्रतिकञ्चुक" इति ।

भर्तृहरिः—अयं महाभाष्यस्य संक्षेपेण सिद्धान्तान् विशदयितुमागम-वाक्य-प्रकीर्णकरूप काण्डत्रयात्मक वाक्यपदीयसंज्ञकं ग्रन्थं कृतवान् । ईशवीय ६५० वर्ष-मित इति चिनदेशीय "इत्सिंग" प्रवासिलिखितवृत्ततो ज्ञायते । शतकत्रयकर्ता भर्तृहरिरस्माद्भिन्नः ।

पुण्यराजहेलाराजौ—एतौ भर्तृहरिकृतवाक्यपदीयग्रन्थस्य टीकाकारौ । एतयोः कालः सम्यक्तयानिश्चेतुं न शक्यते । परन्तु प्राय ईशवीय सप्तमेऽष्टमे वा शतकएतौ प्रादुर्भूतावित्यनुमीयते ।

जयादित्यः—अयं कश्मीरदेशनिवासी बौद्धपण्डितः ईशवीय ६६० वर्षे सूत्रेषु काशिकावृत्तिं लिखितवान् । परन्तु सा परिपूर्णा न जाता ॥

वामनः—अयमपि कश्मीरदेशवास्तव्यः अनेन जयादित्यकृताऽपूर्णा काशिका-वृत्ति परिपूरिता । १, २, ५, ६, अध्यायेषु टीकानेनकृता, काव्यालङ्कारसूत्रकर्ता वामनोऽस्माद्भिन्नः, केचन एकएवेति प्रतिपादयन्ति ।

एवं पाणिनिसूत्रेष्वनेकैर्वैयाकरणैर्वृत्तयोलिखिता इतिज्ञायते । यथा व्याघ्र-भूतिना—सूत्रवार्तिकम् । नारायणेन—शब्दभूषणम् । शिवरामेन्द्रेण—सूत्रवृत्तिः । लक्ष्मणसूरिणा—आदर्शः । कुणिना—सूत्रवृत्तिः, ७४० समयेजातेन विठ्ठलेन—सूत्रवृत्तिः, विप्रराजेन्द्रेण—शब्दामृतम, ९८४ जातेनोदयनेन मितवृत्यर्थसंग्रहः, १२०० शतकोत्पन्नेन परिभाषावृत्तिकारेण सीरदेवेन सूत्रवृत्तिः । एतेषु प्रायः केचन ग्रन्थाः स्वरूपतो बहवोनाममात्रतो ज्ञायन्ते ।

बोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिः—अष्टमशतकोत्तरार्द्धस्थितोऽयं बौद्ध-पंडितः, काशिकाविवरणपञ्जिकां कृतवान्, अस्याष्टीकाया अपरंनाम काशिका-न्यास इति।

कैयटः—अयं ११०० मित समये कश्मीरदेशेस्थितः, अस्य पितुर्नाम जय्यट इति, भ्रातुश्च मम्मट इति, यैश्चालङ्कारशास्त्रे सिद्धान्तभूतः 'काव्यप्रकाश' नामकः ग्रन्थो व्यरचि। कैयटेन भाष्ये प्रदीपसंज्ञकं व्याख्यानं विहितम्। प्रसिद्धविदुषा नागेशेन १७१४ प्रदीपोपरि 'उद्योत' संज्ञकं व्याख्यानं व्यरचि। एवं 'रामकृष्णा-नन्दः' 'शिवरामानन्दश्च भाष्यव्याख्यानं व्यदधताम्।

हरदत्तः—अयमान्ध्रदेशीय पद्मकुमार पुत्रोऽस्य गुरोरपराजित इतिनाम। अयं स्वग्रन्थे कैयटरचितप्रदीपं प्रमाणतया स्वीकरोति। तेन प्रायोद्वादशशतके जात इति संभाव्यते। एतत्कृत काशिकाटीकाया नाम पदमञ्जरिरिति। अस्या रघुनाथेन 'मकरन्दसंज्ञकं' व्याख्यानं कृतम्, शिवभट्टेन पंजिकाया 'कुङ्कमविकाशसंज्ञकं' व्याख्यानं कृतम्। वासुदेवेन च काशिका वृतिसार इति च व्याख्यानं कृतमिति ज्ञायते।

रामचन्द्राचार्यः—अयमान्ध्रदेशीयः शेषकुलोत्पन्नऋग्वेदी कौण्डिन्यगोत्रीय कृष्णाचार्यपुत्रः विट्ठलभक्तः प्रक्रियाकौमुदीसंज्ञकं ग्रन्थं सूत्रेषु कृतवान्। ईशवीय-त्रयोदशशतकेच जातइति वदन्ति। प्रक्रियाकौमुद्याः पूर्वं सर्वाष्टीकाअष्टाध्यायीक्रमा-नुसारिण्यः सूत्रव्याख्यानरूपाः। परन्त्वनेन रूपसिद्ध्यनुसारं सूत्राणि व्याख्याय व्याकरणसूत्रटीकासु नवीनः पन्थाः प्रकटीकृतः।

विट्ठलः—अयं रामचन्द्राचार्यपौत्रः ईशवीयचतुर्दशशतकोतरार्धे जातः। प्रक्रियाकौमुदीव्याख्यां 'प्रसाद' संज्ञिकां कृतवान्।

श्रीकृष्णशेषः—अयमान्ध्रदेशे व्रध्नपुरवास्तव्यः पराशरगोत्रीयनृसिंहाचार्यपुत्रो भट्टोजीदीक्षितगुरुः १५०० शतकपूर्वार्धेजातः, प्रक्रियाकौमुद्याष्टीकां 'प्रक्रियाप्रकाश' संज्ञिकां कृतवान्। एवं रामचन्द्रशेषेण 'गूढभाववृत्तिः' मधुसूदनपुत्र जयन्तेन (१५८०) 'तत्वचन्द्रः'। वारणावतेशेन अमृतसृतिः, विश्वकर्मणा—'सत्प्रक्रिया-व्याावृत्तिः' इत्यादयष्टीकाः कृता इति ज्ञायन्ते।

—भट्टोजीदीक्षित वंशवृत्तः—




भट्टोजीदीक्षितः—अयमीशवीय १५५५ मितसमय आसीत्। श्रीपं० रामचन्द्राचार्य प्रदर्शितरूपसिद्धिक्रममनुसृत्य प्रकरणभेदेन शास्त्रार्थानुसारं भाष्याशयञ्चालोच्य सर्वाङ्गसुन्दरं 'सिद्धान्तकौमुदी' संज्ञकं परिपूर्णं व्याख्यानं पाणिनिसूत्रेषु कृतवान्। अयं तैलङ्गजातीयः शाकलशाखीय ऋग्वेदीब्राह्मणः। अस्य पितुर्नाम लक्ष्मीधर इति। कौमुदीव्याख्यानं सर्वाङ्गसुन्दरं कियता प्रकारेण जातमेतदर्थे विद्वन्मुखविलसिता 'कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः' इत्युक्तिः प्रमाणम्। अयं 'शब्दकौस्तुभ' संज्ञकं भाष्यानुसारिणं सूत्रव्याख्यानभूतं ग्रन्थं कृतवान्। सचापूर्णः। व्याकरणसिद्धान्तप्रदर्शनार्थं कारिकाश्च कृतवान्। एवं कौमुद्या व्याख्यानभूतां भाष्याशयमज्ञात्वा प्रदत्तदूषणोद्धारार्थं प्रौढमनोरमाञ्च कृतवान्।

वरदराजः—ईशवीय १६२० मितकालस्थितोऽयंश्रीभट्टोजीदीक्षितशिष्यः। अयं मध्यसिद्धान्तकौमुदीं, लघुसिद्धान्तकौमुदीञ्च सिद्धान्तकौमुदीमवलम्ब्य शास्त्रान्तरप्रविविक्षूणां ज्ञानाय कृतवान्। १७०० शतकस्थिते मौनिकुलोत्पन्नो जयकृष्ण पण्डितोऽनयोष्टीकां रचितवानिति ज्ञायते।

विश्वेश्वरः—१६७० समयस्थितोऽयं 'व्याकरणसुधामहानिधि' नामकं सूत्रव्याख्यानमकरोत्। एवं सदाशिवमिश्रः (१६७०) सूत्रेषु 'गूढार्थ दीपिनीम्' धरणीधरः—'वैयाकरणसर्वस्वं' सूत्रव्याख्यानं च कृतवान्।

## कौमुदी व्याख्या

नागेशः—अयं १७१४ समये स्थित आसीत्, अस्य मातुर्नाम सतीति, पितुश्च शिव इति। अयं दाक्षित्योब्राह्मणः 'काले' कुले जातः वाराणसीवास्तव्यः। अस्य गुरुर्भट्टोजीदीक्षितपौत्रो हरिदीक्षितः। अयम् कौमुद्या बृहच्छब्देन्दुशेखर संज्ञकं लघुशब्देन्दुशेखरसंज्ञकं च व्याख्यानञ्चक्रे। अनेन व्याकरणे मञ्जूषा, परिभाषेन्दुशेखरः, कैयटकृतप्रदीपस्योद्योतनामकं व्याख्यानञ्चकृतम्। एवं सिद्धान्तकौमुद्याव्याख्यानं कृष्णमिश्रेण १७५० 'रत्नार्णव संज्ञकं, ज्ञानेन्द्रसरस्वत्या १६४० 'तत्वबोधिनी' संज्ञकं, अनन्त पण्डितेन 'बालमनोरमा' संज्ञकं, नीलकण्ठेन 'वैयाकरणसिद्धान्तरहस्य संज्ञकम्', रामकृष्णेन 'वैयाकरणसिद्धान्तरत्नाकर' संज्ञकम्, कृष्णमौनिना १६०० 'सुबोधिनी' संज्ञकम्, वासुदेव दीक्षितेन 'बालमनोरमा'संज्ञकञ्च कृतम्।

## मनोरमा व्याख्या

हरिदीक्षितः १६५० समयस्थितोऽयं भट्टोजीदीक्षितपौत्रः, वीरेश्वरदीक्षितपुत्रः शब्दरत्ननामकं व्याख्यानमकरोत्। एवं कृष्णमिश्रेण १७५० 'कल्पलतासंज्ञकं', चक्रपाणिशेषपण्डितेन 'मनोरमा खण्डनं', पण्डितराज जगन्नाथेन 'मनोरमाकुचमर्दन' संज्ञकं कृतम्। एवं पं० नारायणेन 'सूक्तिरत्नाकरसंज्ञकं' कृतमुपलभ्यते। एतानि शब्दरत्नं परित्यज्य प्रायः मनोरमाखण्डनपराण्येव व्याख्यानानि। अयं किल हरिदीक्षितः शब्दरत्नकारः रामाश्रमस्य शिष्यः। उक्तञ्च तत्रैव टीकायाम्—

गूढोक्तिग्रथितां पितामहकृतां विद्वत्प्रमोदप्रदाम्।
भक्त्याधीत्य मनोरमां निरुपमाद्रामाश्रमात्सद्गुरोः॥
तत्वज्ञानवशात्परेण कलितान्दोषान्समुन्मूलयन्।
व्याचष्टे हरिरेष तां फणिमतान्यालोच्य वैरेश्वरिः॥१॥

केचन—नागोजीभट्टैरेव शब्दरत्नं व्याख्याय स्वगुरुनाम्ना प्रकाशितम्—यथा तैः अध्यात्मरामायणोपरि टीकां विरच्य आश्रयदातुः रामस्य नाम्ना सा प्रकाशिता, प्रायः शब्दरत्ने उद्योत, परिभाषेन्दुशेखर, लघुशब्देन्दुशेखरादिग्रन्थाना मुद्धरणम् दृश्यते, तेनानुमीयते यत् ग्रन्थत्रयलेखनान्तरमेव तैः शब्दरत्नं निरमायि। यदि

दीक्षितैः कृतं स्यात् तदा ते स्वपाण्डित्येन स्वशब्दद्वारा तदभिप्रायं वर्णयितुं प्रभव एव आसन्, कथंकारन्तैः नागेशभट्टकृतग्रन्थानामुद्धरणं स्वग्रन्थे निहितम्।

यदि नागेशपादैरेव गुरुग्रन्थतस्तत्तदुद्धरणं गृहीतमिति स्वीक्रियते, तदपि न रोचते, यद्येवं स्यात्, 'तदुक्तं गुरुचरणैः शब्दरत्न' इत्याद्युल्लेखोऽवश्यमेव तेषां ग्रन्थे स्यात्। किञ्च तत्प्रधानशिष्यैः पायगुण्डे वैद्यनाथ इत्यभिधेयैः शब्दरत्नव्याख्यान रूप भावप्रकाशग्रन्थे (शब्दरत्नोक्तान्यत्रेत्यस्य) शब्देन्दुशेखरे इत्येव व्याख्यानं कृतम्, एवमेव नागेशशिष्यभैरवमिश्रैरपि अन्यत्रेत्यस्यसर्वत्र शेखरइत्येव व्याख्यानं कृतम्। स्पष्टमेतेन यन्नागेशपादैरेव गुरुमरणान्तरं तदृणान्मुक्तये तत्वतोग्रन्थावबोधाय च एतद्ग्रन्थरत्नं निर्माय समेषां वैयाकरणविदुषां महानुपकारः कृत इति वदन्ति।

## —शब्दरत्न व्याख्या—

भैरवमिश्रः—१७८० समयस्थितेनानेन शब्दरत्नटीका कृता, एवं शब्देन्दुशेखरस्य चन्द्रकला संज्ञकं, परिभाषेन्दुशेखरस्य च तथैव व्याख्यानं कृतम्।

पायगुण्डे बालंभट्टः—(वैद्यनाथापरनामधेयः) 'भावप्रकाश' संज्ञकं व्याख्यानं कृतवान्। अस्य च मनोरमा-शब्दरत्न ग्रन्थरत्नस्य सन्त्यनेकाष्टीकास्तथापि ता ग्रन्थरत्नमिव दुरूहतामेवावगाहन्ते। साम्प्रतिकाश्छात्राः- याथातथ्येन ग्रन्थतत्वं कथं जानीयुः, एवं परीक्षापयोधौ कथंकारं पारङ्गत: स्युः इति चिन्ताव्याकुलचेतसा मया परीक्षाब्धितितीर्षूणां, सम्यग्ग्रन्थबुभुत्सूनांचच्छात्राणां कृते "तत्वादर्श" रूपः प्रबन्धो व्यरचि। अस्मिन् प्रबन्धे मनोरमा शब्दरत्नयोः यत्प्राङ्नव्यविवादः, तत्र च कतरन्मतंयुक्तं, तत्तद्भाष्ये च किंध्वनितम्, एतदुपरि सम्यक् प्रकाशः कृतः, येन कोमलमतयश्छात्राः सुलभतया ग्रन्थतत्वं, तत्र तत्र च किं युक्ततरम् इति सम्यगवगच्छेयुः। सूत्रे कस्मिन् विषये विवाद इति स्पष्टीकरणार्थम् तत्प्रतीकमेवादाय विचारः प्रारब्धः। येन सर्वांशे न मतभेदः, अपितु एकदेशे, इति ज्ञानं छात्राणां सुलभतया भवेत्। एतत्प्रबन्धेन कियत्यंशे छात्राणामुपकारो जातः, तद्विषये त एव प्रमाणम्। छात्राणां यदि कश्चन उपकारोऽभविष्यत्, तदैव मम परिश्रमः सफलोऽभविष्यत्। आशासे जगदीशकृपयैतद्ग्रन्थरत्नं पठित्वा छात्राः परीक्षायामुत्तीर्णाः ग्रन्थतत्वज्ञानवन्तश्चावश्यं भविष्यन्ति।

तत्र प्रातःस्मरणीयैः पूज्यपादैः गुरुवर्यैः पं० श्रीद् भालचन्द्रशास्त्रितैलङ्ग महोदयै-रतिशयगरिमप्रेम्णा स्वाध्ययनकाले लिखितं शब्दरत्नविषमस्थलटिप्पणमत्युदार-भावेनावलोकनार्थं मह्यं प्रदायाऽस्मिन्ग्रन्थसम्पादने निरतिशयं साहायकमदायीति तान् सप्रश्रयं सप्रणयञ्चाभिवन्दे ।

एवमेव यत्कृपात एतत्प्रकाशनकार्यं सर्वाङ्गसुन्दरं समीचीनञ्च जातम्, तान् श्री सा० आ० पं० अनन्तरामशास्त्रिवेतालमहोदयान् सादरमभिनन्दामि ।

एवमेव पूज्यतमैः व्या० आ० पं० अनन्तशास्त्रिफड़के महोदयैरनल्पमूल्यसमयं प्रदाय सूक्ष्मातिसूक्ष्मविचारान् सरलतया ममपुरः समुपस्थाप्य ग्रन्थलेखने यत्साहाय्य-मकारि, तदर्थं ते सर्वथाऽभिवन्दनीया इति तान् सप्रश्रयं सप्रणयमभिनन्दामि ।

एतद्ग्रन्थरत्नप्रकाशनार्थं अस्मन्मित्रवर्यैः गोविन्दरामकृष्णचोंच इत्यभिधेयैः अर्थसाहाय्यं प्रदायाहमुत्साहितः इति ते कथं न धन्यवादार्हाः ।

एवमेवास्मन्मित्रवर्यैः शिवरामशास्त्रिकांटे महोदयैः तथा बलरामशास्त्रिसराफ महोदयैः पुस्तकप्रकाशनकार्ये महत्साहाय्यमदायीति ते शतशो धन्यवादार्हाः । 'श्रीस्या-द्वाददिगम्बरजैनमहाविद्यालयीय साहित्यशास्त्रप्रधानाध्यापकान् सोदरनिभान् बाल्य-सुहृद सा० आ० श्री पं० भोलानाथशास्त्रिपाण्डेयमहोदयान् सादरमभिनन्दामि, यत्तैः प्रत्यहमेतत्कार्ये समुत्साहं धैर्यञ्च प्रदाय प्रकाशनकार्यं परिपूर्णं कारितम् । अन्तेच श्रीकाशीविश्वेश्वरान् तथा ग्रन्थस्यास्य भूमिकादिलेखने येषां ग्रन्थकाराणां ग्रन्थाना-मुपयोगः सञ्जातस्तान् सर्वानपि शिरसा नमामि । हंसक्षीरन्यायेनात्र परिशोधितग्रन्थे-ऽक्षराणामत्यन्तं लघुत्वान्ममदृष्टि दोषतो जातानि स्खलितानि संशोध्य गुणैकपक्ष-पातिनोविद्वांसः कण्टकाविद्धसरोजमुकुलवत् निसर्गत एव गुणग्रहणपराः स्युः ।

नचात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषोह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥

इत्युक्तिमनुसन्धायानुगृह्णन्तु मामिति भूयोभूयः साञ्जलिर्बन्धं प्रार्थयते ।

वर्षप्रतिपद्
संवत् २००८

भावत्कः
दिवाकर शास्त्री जोशी व्या० आ०
वाराणसी वास्तव्यः

## अथ पञ्चसन्ध्यन्त मनोरमा-शब्दरत्न-तत्त्वाऽऽदर्शस्थ प्रकरणानाम्-अनुक्रमणिका





## अथ पञ्चसन्ध्यन्त मनोरमा-शब्दरत्न-तत्त्वाऽऽदर्शस्थ विषयाणाम्-अनुक्रमणिका

इति पञ्चसन्ध्यन्त मनोरमा-शब्दरत्न-तत्त्वाऽऽदर्शस्य
विषयानुक्रमणिका समाप्ता ।

———

श्रीगणेशाय नमः

# प्रौढमनोरमा



ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥१॥

## अथ शब्दरत्नम्

शेषविभूषणमीडे शेषाशेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥१॥

ध्यायं ध्यायमिति । ध्यात्वा ध्यात्वेत्यर्थः । णमुलन्तमेतत् । परं सर्वजगदुपादानम् ।

---

## अथ मनोरमा शब्दरत्नतत्त्वाऽऽदर्शः

आस्तिकन्यस्तासिन्दूरशुण्डयाऽरुणयन्दिशः ।
वारणास्यो विघ्नहर्ता भूयाद्भूत्यै भवोद्भवः ॥१॥
प्रणम्य परमात्मानं गोपालं परमं गुरुम् ।
सूर्यनारायणं वन्दे सर्वं ज्ञानप्रदायकम् ॥२॥

ओ३म् । 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत् पुरुषाणि चाध्येतारश्च वृद्धियुक्ताः यथा स्यु'रिति । 'वृद्धिरादैच्' १।१।१। इति सूत्रस्थ भाष्यादि स्मृतिबोधितकर्तव्यताकं समुचितेष्ट देवता-स्तुतिरूपं मङ्गलमाचरन् ग्रन्थप्रचारादिप्रतिबन्धकप्रत्यूहप्रशमनायानुषङ्गतो व्याख्यातृ-श्रोतॄणां मङ्गलाय शिष्यशिक्षायै च ग्रन्थादौ निबध्नाति—शेषविभूषणमिति ॥ शिवस्य विष्णोर्वा मङ्गलाचरणमनुमितिविषयीकृतवेदबोधितकर्तव्यताकमाचरति । शेषः विभूषणं यस्येति तथा शिवः । विष्णुरपि शेषवी शेषगरुडौ भूषणे यस्येति तथा । शेषाशेषेति । शेषस्याशेषाणामर्थानां लाभाय ज्ञानाय । अभीष्टमिति । ईप्सितमित्यर्थः । इष्ट इति । समर्थो भवतीत्यर्थः । णमुलन्तमिति । घञन्तं सम्भाव्याह । द्वितीयायाञ्चेत्यनेनात्र

"ह य व र ट्" (मा० सू० ५)। हकारोपदेशः, अट्अश्हश्इण्ग्रहणेषु

शब्दरत्न

कार्यब्रह्महिरण्यगर्भव्यावृत्तये इदम्। ध्यानं चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम्। स्मरणं तु तज्जन्यमिति विशेषः। गुरोरित्येकवचनेन सर्वविद्यालाभ एकस्मादेवगुरोरिति सूचितम्। प्रौढानां मनो रमयतीत्यर्थिकां मनोरमाम्। प्रौढत्वं च सकलदर्शनार्थ-ज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम्।

इण्ग्रहणेष्विति। नन्विदं न्यूनम्, अम्ग्रहणेऽपि ग्रहणात्। फलं तु बहुपुमकुह्,

तत्त्वाऽऽदर्शः

णमुल्। सर्वंजगदुपादानमिति। उपादीयते=अवश्यङ्गृह्यते इत्युपादानम्, समवायि-कारणमित्यर्थः। ब्रह्मैव लोकात्मना परिणमतीत्यभियुक्तोक्तेः।

हिरण्यगर्भेति। हिरण्यगर्भश्चतुर्मुखः स च जगतो निमित्तकारणन्नोपादान-मित्यर्थः। ननु ब्रह्मेति नपुंसकलिङ्गनिर्देशाच्चतुर्मुखस्य व्यावृत्तौ परमित्यस्योपादानं व्यर्थमिति चेन्न, ब्रह्मणा लोककर्तृणा चेत्यादि श्रुतौ लोककर्तृणेति नपुंसकलिङ्गबोधक-विशेषणपदोपादानेन चतुर्मुखवाचिनो ब्रह्मन् शब्दस्य नपुंसकत्वेन तत्सार्थक्यात्। ननु ध्यानस्मरणयोरैक्यात् ध्यायं ध्यायं स्मारं स्मारमिति पौनरुक्तिग्रस्तमित्याशङ्क्य समाधत्ते—ध्यानं चिन्तापरपर्यायमित्यादिना। धातुसूत्रेषु तु 'ध्यै चिन्तायाम्' 'स्मृ' चिन्तायामिति च पठितन्तस्यायमाशयः—स्मृ धातुः चिन्तायामुपचर्यते, देवदत्त-पुत्रेप्यागते आगतो देवदत्त इति व्यवहारात्। अत्रायं भावः, एकस्य च धातोः मानसिकस्मरणानुकूलव्यापारोऽर्थः अन्यस्य च स्मरणरूपोऽर्थइत्येव विशेषः। ननु मूलोक्तमङ्गलाचरणमयुक्तं गुरुविषयेह्येकवचनमनादरसूचकम्। स्वमिंस्तु कुर्म इति बहुवचनं प्रयुक्तमत आह—गुरोरित्यादि।

मूले—मनोरमामिति। रमयतीति रमा पचाद्यचि मनसः रमा मनोरमा। एतदेव सूचयितुमाह—प्रौढानामिति। प्रौढसम्बन्धि मनःकर्मक रमणकर्तृत्वविशिष्टा-मित्यर्थः। एतेनात्र योगरूढिरितिसूचितम्। सकलदर्शनार्थज्ञानेति। दर्शनानि शास्त्राणि। सकलं यत् शास्त्रार्थज्ञानपूर्वकमहाभाष्यगूढार्थ ज्ञानन्तद्वत्वमित्यर्थः। सर्वेषां वर्णानां सकृदेवोपदेशाद्धकारस्यापि तथैवोपदेश उचित इति किमर्थं द्विवारं हकारोपदेश इत्याशङ्क्य पूर्वहकारप्रयोजनं परिगणयति—अडित्यादिना। बहुपुमिति।

हकारग्रहणार्थः। अर्हेण, "अड्व्यवायेऽपि" इति णत्वम्। देवा हसन्ति, "भोभगो" ( पा० सू० ८।३।१७ ) इति रोर्यत्वम्। देवो हसति, "हशि च" ( पा० सू० ६।१।११४ ) इत्युत्वम्। लिलिहिढ्वे, लिलिहिध्वे, "विभाषेटः" ( पा० सू० ८।३।७९ ) इति वा ढः॥

शब्दरत्न

इत्यादौ "पुमः खय्यम्" इति रुत्वम्। गवित्ययमाहेत्यादिवत्, अपदान्तत्वात्ककारादेर्न जश्त्वमिति चेन्न। "सुट्तिथोः" इत्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहित-हल्समुदायस्यासाधुत्वबोधनात्। अत एव "उच्चैरुदात्तः" [पा० सू० १।२।२९] इति सूत्रे भाष्यं "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" इति। स्फोरित्या-दिस्तु सौत्र प्रयोगः। अत एवाटि हकारप्रयोजनकथनावसरे भाष्ये "शरच्छोटि"

तत्त्वाऽऽदर्शः

कुलमिति शेषः। क् ह् इतीति। क् इति ह् इति पृथगनुकरणे। न जश्त्वमिति। इदमुपलक्षणं ढत्वमपीति बोध्यम्। जश्त्वन्तु समासावस्थायामेव। नचात्र हस्य पदत्वेन संयोगान्तलोपः शङ्क्यः, अनुकार्यानुकरणयोरभेदविवक्षयाऽनुकरणस्य सादृश्य-सम्बन्धेन पदजन्यपदार्थोपस्थितिजनकत्वेनास्यार्थवत्त्वस्यऽर्थवत्सूत्रेऽग्रहणेनादोषात्। तत्र हि शक्तिलक्षणाऽन्यतरसम्बन्धेन पदजन्यपदार्थोपस्थितिजनकत्वरूपार्थवत्त्वस्यैव ग्रहणमिति सिद्धान्तः। सुट्तिथोरिति। नचात्रेकारोऽविवक्षितः, एधिषीष्टेत्यादौ सुडभावप्रसङ्गात्। उच्चारणे नेति। ज्ञापकेनेति शेषः। शास्त्राबोधितेति। शास्त्रजन्यशाब्दविषयीभूतसाधुत्वाभाववान् अच्कर्तृकव्यवधानशून्यश्च यो हल् समुदायस्तस्येत्यर्थः। तेनानुकरणञ्चानितिपरमिति संज्ञाशास्त्रानुमितसाधुत्वस्य क् ह् इत्यत्र प्राप्तावप्यनेनासाधुत्वबोधनान्न दोषः। शास्त्राबोधितेत्युक्त्या ऊर्गित्यादेर्ना-साधुत्वम्। रात्सस्येति शास्त्रजन्यबोधविषयीभूतसाधुत्वस्यैव तत्र सत्वात्। अजव्यव-हितेत्युक्त्या गवित्ययमाहेत्यादौ 'अनुकरणञ्चानितिपर'मिति संज्ञाशास्त्रानुमित-साधुत्वस्य न बाधः। असाधुत्वबोधने मूलमाह—अतएवेति। तत्र हि भाष्यकृता शङ्कितम् 'उच्चैरुदात्त' इति सूत्रेऽच इत्यनुवर्तते नवेति, ततश्चनानुवर्तत इत्युक्तम् फलाभावात्। नच हलार्थन्तत्, हलां स्रंसनधर्मत्वात्, केवलस्य हलोऽप्रयोगाच्च। 'नीचै-रनुदात्त' इति सूत्रे तु मण्डूकप्लुत्या भविष्यति। अन्यथा हलामपि स्यादिति भावः।

"हल्" (मा०सू० १४)॥ इदं सूत्रं वल्रल्झल्शल्षु हकारग्रहणार्थम्। रुदिहि, स्वपिहि, "रुदादिभ्यः सार्वधातुके" (पा० सू० ७।२।७६) इति वलादिलक्षण इट्। स्निहित्वा, स्नेहित्वा, "रलो व्युपधाद्" (पा०सू० १।२।२६) इति वा कित्त्वम्। अदाग्धाम्, "झलो झलि" (पा० सू० ८।२।२६) इति सकारलोपः। अलिक्षत्, "शल इगुपधात्" (पा०सू० ३।१।४५) इति क्सः।

शब्दरत्न

[पा० सू० ८।४।६३।] इत्युपन्यस्य तदुदाहरणं नोपन्यस्तम्। हकारपरशकारासम्भवेन शश्छोटीति प्रसङ्गोच्चारितमिति च कैयटेन व्याख्यातम्। अमि हकारप्रयोजनमिति च भाष्ये नोक्तमिति दिक्॥ इदं सूत्रमिति। वलादिप्रत्याहाराश्च रेफेणैव सन्तु। हरन्त्यमित्यत्रान्योन्याश्रयपरिहारस्तु "रन्त्यं हर्" इति न्यासेनावृत्त्या वा हर्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यर्थेन सुकर इति भावः। ग्रहणार्थमिति। शषसहरित्येव तु नोक्तम्। खरि हकारग्रहणापत्तौ हरिर्हरतीत्यादौ विसर्गापत्तेः।

तत्त्वाऽऽदर्शः

'हल्'। इदं सूत्रमितीति। ह ग्रहणाभावे ल ग्रहणं न कार्यम्, तथा च त्रयोदशसूत्र्येवास्त्विति तदाशयः। परिहारस्त्विति। रन्त्यं हरित्येव कार्यम्। अन्त्य र् इदिति पूर्ववाक्यार्थः। ततश्चेत्पदार्थज्ञाने जाते हर् पदार्थज्ञानेऽपि जातेऽन्त्यं हरिदिति समीचीनमेव। अन्यपक्षमाह—आवृत्त्येति। हरः अन्त्यमिति विग्रहः। हर् पदस्य हकारादिरान्तसमुदाये लक्षणा। नन्वीदृशलक्षणाश्रयणे 'आदिरन्त्येनेति' सूत्र वैयर्थ्यापत्तिः, अच् पदस्यापि अकारादि चान्तसमुदाये लक्षणास्वीकारेणैव सिद्धेरत आह—वेति। खरीति। इदमुपलक्षणम्, शर्यपि ग्रहणेन खयः शर इति द्वित्वमित्यादि बोध्यम्। विसर्गापत्तेरिति। 'प्रेष्यब्रुवोर्हविषो देवता सम्प्रदाने' इतिनिर्देशाद्धकारे परतो विसर्गाभावबोधनेऽपि प्राङ् हसतीत्यत्र हकारस्य शर्पदेन ग्रहणात् कुगागमापत्तिः। नचैङ्ह्रस्वादिति निर्देशसामर्थ्यात् सोऽपि न भवतीति वाच्यम्, कुगागमस्य वैकल्पिकत्वेन सामर्थ्यस्योपक्षीणत्वात्।

ननु हलि अन्त्यमिति विग्रहेऽस्तीप्यादि क्रियाध्याहार्यात्तत्र प्राचीनमते कारकाणां स्ववृत्तिवृत्तित्वसम्बन्धेन क्रियायामेवान्वयात् हल पदार्थस्यान्त्यपदार्थेऽ-

हलन्त्यम् ( पा० सू० १।३।३ )॥ सूत्रेऽन्त्यमिति। हलि अन्त्यमिति विग्रहे सप्तमीति योगविभागात् "सुप्सुपा" ( पा० सू० २।१।४ ) इति वा समास इति भावः।

---

शब्दरत्न

सप्तमीति। अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वयादस्ति सामर्थ्यमिति भावः। अस्य योगविभागस्य भाष्येऽदर्शनादाह—सुप्सुपेतीति। अनेनापि साधनस्यागतिकगतित्वादाह—यद्वेति। हलो हलिति सूत्रस्यान्त्यमिति विग्रह इति भावः। "षष्ठी स्थाने" इत्यस्य च "ऊदुपधाया गोहः" [ पा० सू० ६।४।८९ ] इत्यादाविव गुणानां च परार्थत्वादिति न्यायेन वाऽप्रवृत्तिरिति बोध्यम्।

---

तत्त्वाऽऽदर्शः

न्वयाभावेनासामर्थ्यात्कथं समास इत्यत आह—अस्ति सामर्थ्यमिति। साक्षात्कर्तृकर्मद्वारा क्रियान्वयित्वेनोपकारकत्वमिति भावः। ननु सप्तमीतियोगविभागः क्वाप्यदृष्टः स च न स्वयं कल्पनीयः अत आह—सुविति। मूले—स्यादेतदिति। इदं सम्भाव्यत इत्यर्थः। केचित्तु—यदि मदुक्तं समाधानं न स्यात्तर्ह्येवं स्यादिति व्याख्याञ्चक्रुः। तन्न संभावनायां क्रियातिपत्तौ लृङ बाधात्। मम तु प्रसिद्ध एव संभावनायां लिङ्। गोहइत्यादाविवेति। ननु किं सादृश्यमात्रप्रदर्शनेन तत्रापि कुतो न प्रवृत्तिरितिचेदुच्यते—गोह उपधाया इत्यत्रोपधात्वं, स्वसमुदायघटकान्त्याल-वधिकपूर्वत्वे सति स्वसमुदायावयवत्वम्। यद्यपि कौमुद्यामलोऽन्त्यात्सूत्रे दीक्षितैः अन्त्यादलः पूर्वोवर्ण उपधेत्येवं व्याख्यातम् तथापि तत्समुदायावयवत्वमित्यवश्यं वाच्यम्, अन्यथा हि दधिशब्दपूर्वकेण्धातोरपि 'इगुपधे' ति क प्रत्ययापत्तिः। अत्र चावयवशब्दोनित्यसाकांक्षः। अतो नित्यसाकांक्षपदार्थबोधकपदसमभिव्याहृत षष्ठ्या असतितात्पर्यविशेषनिश्चायकेऽन्यस्मिन्पदे येन सम्बन्धेन सम्बन्धिनमाकांक्षते स पदार्थस्तत्सम्बन्धे षष्ठ्यास्तात्पर्यन्निश्चीयत इत्यभियुक्तोक्त्याऽवयवावयविभावसम्बन्धे निश्चिते न 'षष्ठीस्थान' इति सूत्रप्राप्तिः, अनिश्चितसम्बन्धविशेषबोधकषष्ठीत्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात्। एवमेवात्रापीति भावः। पक्षान्तरमाह—गुणानामिति। अशब्दसंस्कारकशास्त्राणां शब्दसंस्कारकशास्त्रोपकारकत्वात्। यथा

यद्वा षष्ठीतत्पुरुषोऽयम् । स्यादेतत् हलित्येकदेशस्यैव तन्त्रावृत्त्येकशेषान्यतममस्तु । हस्य ल् इति च व्याख्यास्यते । सामीप्यं षष्ठ्यर्थः ।

यद्वा मास्तु तन्त्रादि । अस्तु समाहारद्वन्द्वो हल् च ल् चेति । लकारस्य संयोगान्तलोप इति चेन्मैवम् ॥

## शब्दरत्न

तन्त्रावृत्त्येकशेषान्यतममस्त्विति । यद्यपीदृशे विषये उच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणं बोद्धुस्त्वावृत्त्या बोध इत्येवानुभवसिद्धं, तथापि व्यवस्थितैवान्यतमसत्ताऽनेन बोध्यत इति न दोषः । एकशेषश्च प्रत्याख्यातोऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः । सामीप्यं षष्ठ्यर्थ इति । "षष्ठीस्थाने" इत्यस्य गुणानां च परार्थत्वादिति न्यायेनाप्रवृत्तिः । न च "इको गुणवृद्धी" [पा०सू०१।१।३]

## तत्त्वाऽऽदर्शः

ह्येकस्वामिकभृत्यद्वयस्य न परस्परमुपकार्योपकारिता तथैवायं न्यायः । ईदृशे विषय इति । विरुद्धार्थप्रतिपादकविषय इत्यर्थः । तन्त्रैकशेषान्यतरेणेति । तन्त्रं नाम—नानाफलकसमानाकारकानेकव्यापाराणां मध्ये एकव्यापारेण फलोत्पादनम् । प्रकृते च पाणिनिनाऽर्थद्वयतात्पर्येण 'हलन्त्य' मित्येकवारमुच्चरितम् । अथवा द्विवारमुच्चार्यैकस्यैकशेषः कृत इत्यत्र विनिगमना विरह इति भावः । आवृत्त्या बोध इति । 'सकृदुच्चरितः शब्दः सकृदेवार्थञ्जनयति' इति न्यायेनैकेनशब्देनार्थद्वयबोधासम्भवात्तत्रैकशेषान्यतरविषये बोद्धुस्त्वावृत्तिरावश्यिकीति भावः । व्यवस्थितैवेति । वक्तुस्तन्त्रं वा एकशेषो वा बोद्धुस्त्वावृत्तिरेवेत्येकस्मिन्नेकमेवेति भावः । एकशेषश्चेति । अत्र यद्यपि न सहविवक्षा तथापि सौत्रत्वाद्भविष्यतीत्यर्थः । तन्त्रेणैव सिद्धे एकशेषसूत्रन्नियमार्थम् । अन्यलोपो भवत्येवेति । यद्यप्यस्त्येतत्सूत्रस्य फलन्तथापि भाष्ये प्रत्याख्यातमितिभावः । सामीप्यमिति । समीपमेव सामीप्यं स्वार्थे ष्यञ् । षष्ठी स्थान इति । यद्यपि हस्थानिक लकारा सम्भवन्त्स्तथाप्येतादृश शङ्कैव नोदेतुमर्हतीत्याशयेनाह—गुणानामिति । वस्तुतस्त्वयंन्यायोऽनित्यः, अतएव संयोगेगुर्वित्यत्र तस्मिन्नितिपरिभाषाप्रवृत्त्या संयोगाव्यवहितपूर्वत्वविशिष्टस्य ह्रस्वस्य गुरु संज्ञा भवति, अन्यथा व्यवहितस्यापि स्यात् तथाचासार्वत्रिक इति न्यायेन षष्ठीस्थान इति शास्त्रप्रवृत्तिप्रतिबन्धस्य कर्तुमशक्यत्वात् । स्वनडुक्षुनातीत्यत्र हस्थानिकलकारस्य सत्वेन

आद्ये समासस्य क्लिष्टत्वात्। न हि ब्राह्मणकम्बल इत्यादौ ब्राह्मणसमी-

शब्दरत्न

इति सूत्रे तच्छेषशब्देन परिभाषयोरपि गुणगुणिभाव उक्त इति वाच्यम्। "सार्वधातुकार्धधातुकयोरलोन्त्यस्येकोगुणवृद्धी" इति सूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेष्यविशेषणभावमादायैव तच्छेषव्यवहारो न तु गुणगुणिभावेन परस्परापेक्षत्वेन वेति कैयटेन स्पष्टमुक्तेः। एतन्मूलकतयैव तत्पक्षासम्भवस्य तेनोक्तेश्चेति भावः॥

क्लिष्टत्वादिति। 'ब्राह्मणस्य कम्बलः' इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवदन्तरसमीपादिशब्दप्रयोगमन्तरेण सामीप्याद्यप्रतीतेः तस्य षष्ठ्यर्थत्वा-

तत्त्वाऽऽदर्शः

च हस्य ल् हलिति व्याख्याने हस्थानिक लकारस्यैवेत्संज्ञा स्यादित्यपि दोषो बोध्यः। विशेष्यविशेषणभावमादायेति। सार्वधातुकार्धधातुकयोरित्यत्रेक्रूपस्यान्त्यस्यालः, अलान्त्यरूपस्येक इति वा विशेष्यविशेषणभावमादायेत्यर्थः। एतन्मूलकतयेति। सार्वधातुकेति सूत्रस्य लक्ष्यसंस्कारोपयोगिमहावाक्यार्थबोधे इको गुणवृद्धीति परिभाषोपस्थित इक इत्यस्य अलोऽन्त्यस्येति परिभाषोपस्थितान्त्यस्याल इत्यस्य च विशेष्यविशेषणभाव प्रयुक्त एव तच्छेषव्यवहारो नतु इको गुणवृद्धी अलोऽन्त्यस्येत्यनयोर्गुणगुणिभाव प्रयुक्तः, परस्परापेक्षप्रयुक्तो वा। परिभाषयोः परस्परं गुणगुणिभावस्य परस्परापेक्षत्वस्यासम्भवादित्येतन्मूलकतयैवेत्यर्थः। तत्पक्षासंभवस्येति। तच्छेषपक्षासंभवस्येत्यर्थः। तेनोक्तेरिति। कैयटोक्तेरित्यर्थः। अत्रेदन्तत्त्वम्—भाष्ये तच्छेषस्तदपवादः पदोपस्थितिरिति पक्षत्रयम् 'इकोगुणवृद्धीति' परिभाषा विषयेऽभिहितम्। तत्र तच्छेषो नाम—तच्चेदञ्चयदेकं वाक्यन्तदा। भिन्नं वाक्यन्तदा तदपवादः। पदोपस्थितिर्नाम—विधेयताप्रयोजकगुणवृद्धिपदघटिते शास्त्रे इक इति षष्ठ्यन्तपदमुपतिष्ठत इत्युक्तम्। तस्यायम्भावः, 'यथाऽऽग्नेयं चतुर्धा करोति, पुरोडाशं चतुर्धाकरोति' इत्यनयोरुपसंहारन्यायेनैकवाक्यं कृत्वाऽऽग्नेयपुरोडाशस्यैव चतुर्धाकरणन्तथाऽलोऽन्त्यस्येकोगुणवृद्धीत्यनयोरेकवाक्यतया गुणवृद्धी अन्त्यस्याल इकः स्थाने भवत इत्येकवाक्यतया वाक्यार्थस्तदातच्छेषः।

पवर्त्यन्यदीयः कम्बलः प्रतीयते। न वा चित्रगुशब्दाच्चित्रगवीणां समीपवर्त्ती वृक्षादिः प्रतीयते। अत एवानन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकरे।

---

शब्दरत्न

भावात्तत्प्रयोगे त्वसामर्थ्यात् षष्ठीसमासाप्राप्तिरिति मध्यमपदलोपिसमासे सौत्रे वा तत्र समासस्य क्लिष्टत्वमिति भावः। तदेतदाह—नहीत्यादिना तत्रानिष्ट इत्यन्तेन। चित्रगवीणामिति। 'कुमति च' [पा०सू० ८।४।१३] इति णत्वम्। दन्त्यपाठस्तु लेखकप्रमादात्। एवं स्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्रयोगेऽपि बोध्यम्।

---

तत्त्वाऽऽदर्शः

अस्मिन्पक्षे च 'मिदेर्गुणः' मृजेर्वृद्धिरित्यादाविक इति पठनीयम्। अन्त्यालरूपेकोऽसम्भवेनैतत्परिभाषाया अप्रवृत्तेः। यदा 'इकोगुणवृद्धी'तिपरिभाषाशास्त्रस्य गुणवृद्धीत्वरूपव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वेनादेशत्वरूपव्यापकधर्मावच्छिन्नोद्देश्यताकालोऽन्त्यस्येत्यस्य बाधस्तदा तदपवादः। अस्मिन्पक्षे सार्वधातुकार्धधातुकयोः। सिचिवृद्धिरित्यादौ चानन्त्यस्य गुणवृद्धी वारणायान्त्यस्येति पठनीयम्। 'इकोगुण वृद्धी'तिपरिभाषयाऽलोन्त्यस्येत्यस्य बाधेन तस्याप्रवृत्तेः। यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तम्पदमुपतिष्ठते इति यदैकोगुणवृद्धीति सूत्रार्थस्तदा पदोपस्थिति पक्ष इति। मूलोक्तन्न युक्तम्—तच्छेषपदोपस्थितिपक्षयोरवैलक्षण्यापत्तेः, पदोपस्थितिपक्षेऽपि अन्त्यस्याल इक इत्यस्य च विशेषणविशेष्यभावस्य सत्वादिति दिक्।

तत्प्रयोग इति। अनन्तरादिशब्दप्रयोग इत्यर्थः। असामर्थ्यादिति। सामर्थ्यञ्चैकार्थीभावरूपन्तच्च पदविशिष्टत्त्वम्। वै० च स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्व, स्ववृत्तिशक्तिपर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन। मध्यमपदलोपि समास इति। शाकपार्थिव इतिवत्। ह समीपवर्तो ल् हल् इति मध्यमपदलोपि समासः। सौत्रेवेति। 'असूर्य ललाटयोरि'त्यत्र समासविधायक शास्त्रस्याभावेऽपि यथा सौत्रत्वात्समाससाधुतास्वीकारस्तथैवेत्यर्थः। कुमतिचेति णत्वमिति। नच कुमतिचेति णत्वस्यासिद्धत्वादेकाजुत्तरपदेण इति णत्वेन भाव्यमितीदमसङ्गतमिति वाच्यम्। पूर्वत्रासिद्धमित्यस्य परिभाषात्वेन फलसत्वे एव तस्याः प्रवृत्या प्रकृते कुमतिचेति णत्वे एकाजुत्तरपदेण इति णत्वे वा फले विशेषाभावेन पूर्वत्रासिद्धमित्यस्याप्रवृत्तेः।

किं बहुना 'ब्राह्मणस्य कम्बलः' 'चित्रा गावोऽस्य' इति व्यस्तप्रयोगोऽपि तत्रानिष्टः।

---

शब्दरत्न

अस्तेरनन्तरे समीपे वेत्यादि भाष्यं त्वनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका वा षष्ठीत्यभिप्रायकम्। अत एव मतुप्सूत्रे

---

तत्त्वाऽऽदर्शः

किञ्च समासान्तनामुत्तरपदावयवत्वेन टचः गो इत्यस्यावयवत्वादेकाजुत्तरपदत्वाभावान्नतेन णत्वम्। अतएव द्विधुरीत्यत्र ऋक्पूरब्धूरित्यप्रत्ययस्योत्तरपदावयवत्वेनाकारान्तोत्तरपदत्वेन ङीष् प्रत्ययः। नवीनास्तु—समासान्तानां केवलमुत्तरपदावयवत्वे 'उपशरद'मित्यत्रादन्ताव्ययीभावाभावादमादेशो न स्यात्।

अतः समासचरमावयव इति प्रोचुः। भाष्यकृता विभक्तौ परतः कृतद्वन्द्वानामेकशेष इतिपक्षे 'ऋक् च ऋक् च ऋचौ' इत्यात्रासारूप्यादेकशेषो न स्यादित्युक्तम्। समासान्तानां समासचरमावयवत्वे 'ऋक् पू' इति जातस्याप्रत्ययस्य समासावयवत्वेन ऋच् ऋ इत्यस्य सारूप्येनैकशेषः स्यादित्युक्तभाष्यविरोधः। उत्तरपदावयवत्वे चासारूप्यं स्पष्टमेव। तथा च नाव्ययीभावादतोऽम्त्वपञ्चम्याः। सरूपसूत्रस्थ भाष्ययोः परस्परमविरोधायोत्तरपदावयवः सन् समासचरमावयवो भवतीति सिद्धान्तेन टचः उत्तरपदावयवत्वेनैकाजुत्तरपदत्वाभावान्नएकाजुत्तर पद इति णत्वम्। एवञ्च कुमति चेति णत्वमिति लेखनं सम्यगेवेति, तन्न सरूपसूत्रस्थभाष्यन्तूत्तरपदावयवत्वानाश्रयणेऽपि योजयितुं शक्यम्। समासान्तानां समासावयवत्वेऽपि तत्प्राग्भागस्य विभक्तिपरत्वाभावः। तद्विशिष्टस्य तु न सरूपत्वमिति तद्भावः। अन्त इत्यादि सूत्रस्थभाष्यविरुद्धश्चोत्तरपदावयवत्वम्। एवं हि तत्र भाष्यं समासस्यान्तोदात्तत्वमुत्तरपदस्यवेति विकल्पे आद्ये इदम्प्रथमका इत्यादौ कपोऽन्तोदात्तत्वापत्तिः। अन्त्येऽनृच इत्यत्रान्तोदात्तत्वासिद्धिरित्युक्त्वोभयोरपिप्रकरणे लक्ष्यानुसारात्क्वचिदुत्तरपदान्तस्य क्वचित्समासान्तस्योदात्तत्वमिति। स्वयमेव समासार्थबोधकालौकिकप्रक्रियावाक्ये एव चरमावयवीभूय समासान्तः प्रवर्तक इति सिद्धान्तितम्। 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति'न्यायेन द्विधुरीत्यस्य साधितत्वादिति दिक्। कुमतिचेति णत्वमिति प्राचीनमतानुसारेणेति बोध्यम्।

शब्दरत्न

कैयटेन गावोऽस्य सन्त्यनन्तरा इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्युक्तम्, नतु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम्। भाष्यकृता चासामर्थ्यात्तत्र वृत्त्यभाव उक्तः। षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्कासामर्थ्यम्। तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहार एव बोध्यः। तत्रास्तिग्रहणाभावे तस्यान्यफलकत्वे वा सूत्रानुपात्तास्त्यर्थान्तर्भावेण मत्वर्थीयवद्बहुव्रीहिवच्चतथाभूतानन्तर्याद्यर्थान्तर्भावेण चित्रा गावोऽस्य सन्त्यनन्तरा इत्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम्। अनन्तरादेरिदमर्थत्वे "तस्येदम्" [पा० सू० ४।३।१२०] इति शैषिकोऽप्यनभिधानान्नेति "तस्येदम्" [४।३।७] इत्यत्र भाष्ये। तदुक्तम्—अनन्तरादिषु न समासोऽनभिधानादिति स्पष्टमाकर इति। तत्र समासग्रहणं तद्धितवृत्तेरप्युपलक्षणम्। अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव। ग्रामकूपो गङ्गातीरमित्यादौ समीपे एवावयवत्वारोपेण समासः।

---

तत्त्वाऽऽदर्शः

अस्तेरिति। अस्तेर्भूरित्यत्र भाष्ये शङ्कितम्। अस्तेः समीपे वा भूरनन्तरे वा भूरिति। तत्र यद्येतादृशार्थः षष्ठ्या न स्यात्तदा कथमेतदुक्तमित्याह—भाष्यन्त्विति। तन्निरूपितसम्बन्धार्थिकेति। अनन्तरादिपदमध्याहृत्य तदनुयोगिक सम्बन्धार्थिकेत्यर्थः। अतएवेति। आनन्तर्यादेः षष्ठ्यर्थत्वाभावादेवेत्यर्थः। आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरिति। यथाऽस्तिमानित्येतद्रूपसम्पत्तये सूत्रेऽस्तिपदोपादानं नतु प्रत्ययार्थः, तथाऽऽनन्तर्यादिकमपि न प्रत्ययार्थः, किन्तु अध्याह्रियमाणास्त्यर्थो यथा प्रकृत्यर्थोपाधिः प्रकृत्यर्थाविशेषणन्तद्वदिदमपीति भावः।

अस्त्यर्थाभावे सूत्रस्थ तत् इति प्रथमायाः सम्भवः, 'तिङ्समानाधिकरणे प्रथमे'त्युक्तत्वात्। अतोऽस्त्यर्थे मतुप् भवति। एवमेव बहुव्रीहावनेकमिति प्रथमा निर्देशो बोध्यः।

अनभिधानादिति। षष्ठ्या आनन्तर्याद्यर्थबोधनशक्त्यभावादित्यर्थः। ग्रामकूप इति। वस्तुतस्तु ग्रामशब्दो न केवलं गृहसमूहे रूढः किन्तु ससीमके सक्षेत्रेऽपि, अतः कूपो ग्रामावयव एवेति न किञ्चिदनुपपन्नमित्यास्तान्तावत्।

द्वितीयेऽपि संयोगान्तलोपो दुर्लभो, यणः प्रतिषेधारम्भात्। तत्प्रत्याख्यान-पक्षेऽपि "झलो झलि" ( पा० सू० ८।२।२६ ) इत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानाच्च । किं च पदार्थबोधं विना वाक्यार्थबोधासंभवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थोऽयं यत्नः। अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः, सहविवक्षाया असम्भवात्। तस्माद्यथोक्तमेव न्याय्यम् ॥

---

शब्दरत्न

स्पष्टा चेयं रीतिः "मपर्यन्तस्य" [ पा० सू० ७।२।९१ ] इति सूत्रे कैयटे। किं च हस्य लित्यर्थे "हल विलेखने" इति धातोर्लस्येत्त्वापत्तिः। न च फलाभावः देवदत्त-हलित्यादौ ङित्वसामर्थ्यादभस्यापि टेर्लोपवल्लित्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेऽपि लित्स्वरस्यैव फलत्वं वक्तुं शक्यमित्यपि बोध्यम्। यद्यपि "हलसीरात्" [ पा० सू० ४।३।१२४ ] इति निर्देशेन तस्य नेत्त्वमिति कल्पयितुं शक्यम्। तथापि ज्ञापकस्वीकारापेक्षया सूत्रावृत्तिरेव लघीयसीति दिक्।

---

तत्त्वाऽऽदर्शः

मूले दुर्लभ इति। ननु यणः प्रतिषेध इत्यस्य सत्वे गिरिवेश्मयतेः क्विपि गिरिवेडिति। झल् ग्रहणापकर्षे झलन्तसंयोगाभावाद्गिरिवेश्म् इति, आरम्भ प्रत्याख्यानयोः फलभेदः अतः संयोगान्तस्य लोपः झलः झलिति योगविभागः। 'संयोगान्तस्य लोप' इति सूत्रेणैव झलझल् साधारण्येन लोप सिद्धौ झलित्यस्य वैयर्थ्यरूप सामर्थ्येन पूर्वसूत्रस्य झलतिरिक्तत्वेऽपि क्वाचित्क प्रवृत्तिः। एवञ्च गिरिवेडित्यत्र 'संयोगान्तस्य लोप' इति सूत्रेणैव लोपेनारम्भ प्रत्याख्यानयोः फलभेदः। अतएवामोमशितिसूत्रे मकारं प्रश्लिष्याऽनेकाल्त्वात्सादेशे संयोगान्तस्येति सूत्रेण मकारस्य लोपे बवीं वृत्र-मित्यस्य सिद्धिम्प्रदर्श्य शिद्ग्रहणप्रत्याख्यानपरं भाष्यं सङ्गच्छते। किञ्चातोऽमित्यत्र 'म्' इतिच्छेदे 'अम्' इत्यत्रादेः परस्येत्यनेनाकारस्य मकारे संयोगान्तस्येत्यनेन मकार लोप कथन परमपि भाष्यं सङ्गच्छते। एवञ्च हल् च ल्चेति समाहारे संयोगान्तस्येति लोपः स्यादितिचेन्न यणः प्रतिषेधो वाच्य इति वार्तिक सत्वे हल् ल् इत्यत्र लोपाप्राप्त्या विरोधस्य तादवस्थ्येन पूर्वोक्त भाष्य प्रामाण्याच्च यणतिरिक्तेऽझलि संयोगान्तस्य प्रवृत्तिर्भवतीत्येव कल्पना ज्यायसी। तथाच हल्च ल्चेत्यत्र संयोगान्त

शब्दरत्न

झलो लोपेति । सौत्रलोपाश्रयणे तु मूलोक्तमेव लघु । असम्भवादिति । नच "आद्यन्तौ टकितौ" [ पा० सू० १।१।४६ ] इत्यादौ यथासङ्ख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि प्रथमतो लकारो हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्व-साधुत्वं, ततो विशेषजिज्ञासायामादिरन्त्येन, इत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः ।

किं च, सहविवक्षा–सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनान्यथानुपपत्त्या पाणि-नेस्ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव, त्रोद्धृबोधस्तु क्रमेणैवेतिवाच्यम्, "आद्यन्तौ" [पा०सू० १।१४६] इत्यादौ यथासंख्यसूत्रारम्भसामर्थ्येन तथासाधुत्वाङ्गीकारेऽप्यन्य-प्रकारेण तस्य साधुत्वकल्पने मानाभावात् । किंच श्रोतॄणां सह बोधो भवत्विती-च्छया सहवक्तुमिच्छयाएव सह विवक्षात्वेन श्रोतणामपि सहबोध एवोचितः, तादृशे-

तत्त्वाऽऽदर्शः

लोपो दुर्लभ इति सम्यगेव । नचेति । आद्येटितोऽन्वये अन्तेकितोऽन्वय अपेक्षित-स्सच द्वन्द्वे न भवति, साहित्यावच्छिन्ने साहित्यावच्छिन्नस्य भ्रमात्मकमेव बोधं कल्पयित्वा पश्चादादिसिद्धिर्भवति अन्तः किद् भवतीति भ्रमात्मके बोधे पाणिने-स्तात्पर्यमिति कल्पनाऽऽवश्यकी एवमेवात्रापीत्यर्थः । हल्पदवाच्यश्चेति । हकारादि लान्तसमुदाय घटकानां हकारादि लान्तसमुदाय घटकत्वेन रूपेण शक्त्य-ग्रहेणऽपि हल् पद वाच्यत्वेन रूपेण बोधे बाधकाभावात् । विशेप जिज्ञासायामिति । हल् पदवाच्यः क इति विशेपजिज्ञासायामित्यर्थः । विशेपतो वाक्यार्थ इति । हकारादि लान्तसमुदायघटकत्वप्रकारक हकारादि विशेष्यक वाक्यार्थ बोध इत्यर्थः । सहवक्तुं वक्तुरिच्छेति । एक रूपावच्छिन्नस्यैकरूपावच्छिन्न संसर्गेणैक-रूपावच्छिन्ने वक्तृसमवेतान्वयबोधानुकूलशब्दप्रयोगेच्छेत्यर्थः ।

सूत्र प्रणयनान्यथानुपपत्त्येति । प्रथमतो जानाति तत इच्छति ततो यतत इति पाणिनेर्हल्पदार्थज्ञानमन्तरातद्बोधेच्छाया असंभवात्तादृशेच्छायामन्तरा हल्पदोच्चारणानुकूलकृतेः पाणिनेरसंभवादिति भावः । अन्यप्रकारेणेति । पाणिनेः सूत्रप्रणयनान्यथानुपपत्त्या सह वक्तुं वक्तुरिच्छेति सह विवक्षामादाय द्वन्द्वस्य

शब्दरत्न

च्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः। मुखनयनं पश्येत्यादौ तु न दोषः। उभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात्। तेन रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत्। किं च, पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः। अन्यथा व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या "लट् स्मे" [पा०सू० ३।२।११८] इति सूत्रस्थकैयटोक्तरीत्या लक्षणया, तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा ततः श्रोतॄणां बोधसम्भवेनेतरेतराश्रयस्यैवाभावेन तदाऽऽशङ्का लब्धेतिवक्तव्यमित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः। न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तावादिरन्त्येनेति सूत्रवैयर्थ्यम्। क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात्। "नासूया कर्त्तव्या यत्रानुगमः क्रियते" इति "पंक्तिविंशति" [पा० सू० ५।१।५९] इति सूत्रे भाष्योक्तेः। तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव कल्पना ज्यायसी, ध्वनितश्चायमर्थो "नाऽऽज्झलौ" [पा०सू० १।१।१०] इति सूत्रेऽष्टादशानां ग्रहणाभावाय "वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्संज्ञा, इत्सञ्ज्ञोत्तरकालः प्रत्याहारः, प्रत्याहारोत्तरकालासवर्णसञ्ज्ञा तदुत्तरकालमणुदिदिति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नापि स्वाङ्गे" इत्येवं वाक्यापरिसमाप्तिप्रतिपादकभाष्येणापि। अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिनेस्तथाज्ञानस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धृणामपि क्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात्, कथं वा नाऽज्झलावित्यत्राष्टादशादीनां ग्रहणवारणं भाष्योक्तं सङ्गतं स्यादिति विभाव्यतां तदाह—तस्मादिति॥

---

तत्त्वाऽऽदर्शः

साधुत्वमिति यथासंख्य सूत्र सामर्थ्यान्यप्रकारेणेत्यर्थः। भ्रान्तत्वापत्तिरिति। हल्पदशक्तिग्रहाभावे बोधानुदयात्पाणिनेस्तादृशेच्छाया उच्चारणं भ्रमेणेति भ्रान्तत्वापत्तिरितिभावः। उभमयत्वेन ज्ञातं प्रत्येवेति। मुखपदनयनपदनिष्ठशक्तिग्रहवन्तम्पुरुषम्प्रत्येवेत्यर्थः। पाणिनेर्हल्पदशक्तिग्रहसत्त्वेपि पाणिनिना हल् पदन्नतदर्थं तात्पर्येणोच्चरितमित्यत्र प्रमाणमाह—किञ्चेत्यादिना।

✓ मध्यगानामिति। आद्यन्ताभ्यामवयवाभ्यामवयवीसमुदाय आक्षिप्यते; तस्य च युगपल्लक्ष्ये प्रयोगाभावातदवयवेष्ववतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयोः, संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादिति भावः।

---

शब्दरत्न

आद्यन्ताभ्यामिति। अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः। तस्येति। समुदायस्य। तयोः पारार्थ्येति। सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकाले एव तयोः पारार्थ्यनिर्णयादित्यर्थः, परामर्शित्वादिति। वस्तुतो ज्ञापकादिनाऽस्यापि न संज्ञाकार्यम्, आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येष्वामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात्। स्वशब्दानुवृत्तेश्च न फलम्। भाष्येऽपि एतत्फलितार्थ-

---

तत्त्वाऽऽदर्शः

मूले मध्यगानामिति। अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामवयवीसमुदाय आक्षिप्यते। यद्यप्याक्षिप्तस्य शाब्दबोधे भानं न भवति तथापि अर्थापत्त्याऽऽक्षिप्तस्यतु शाब्दबोधे भानं भवत्येव। अर्थापत्तिश्च—परस्परविरुद्धत्वेनावभासमानहेतुद्वय साध्यानुमितिः। यथा 'पीनोऽयं देवदत्तः दिवा न भुङ्क्ते' इत्यादि एवञ्च समुदायस्य युगपत् एकस्मिन् लक्ष्ये प्रयोगाभावात् अवयवेष्ववतरन्ती अजादिसंज्ञा मध्यगेषु वर्णेषु विश्राम्यति, नत्वाद्यन्तवर्णयोः, तयोः अजादिसंज्ञास्वरूपबोधकत्वेव 'आदिरन्त्येने'तिशक्तिग्रहकाले एव संज्ञिबोधकत्वानिर्णयात्, यतो हि संज्ञा संज्ञिनं बोधयति नतु संज्ञास्वरूपमिति नियमात्।

अतः प्राञ्चः स्वशब्दानुवृत्तिं 'स्वंरूपं०' इत्यादि सूत्रतः स्वीकृत्य सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वमिति नियमेन स्वशब्देन आदेरेव ग्रहणं नान्त्यस्येति तेषु न संज्ञाकार्यमिति स्वीकुर्वन्ति।

नव्यास्तु—आद्यन्ताभ्यां स्वघटितसमुदायाक्षेपे मध्यगेषु प्राप्तायाः संज्ञायाः 'अनुनासिक' इत्यादि निर्देशज्ञापकेनैववारणं यथा भवति तथैव संज्ञाघटकान्त्यस्यापि न संज्ञाकार्यमिति स्वशब्दानुवृत्तौ फलाभावः। भाष्येऽपि ज्ञापकफलितार्थ कथनमेव स्वस्य च रूपस्येति।

किञ्च स्वशब्देन केवलान्त्यपरामर्शासंभवेऽपि विशिष्टपरामर्शे बाधकाभावः, एवञ्च समुदायेफलाभावादवयवयोर्विश्रान्तिम्प्राप्स्यति, ततश्च पूर्वोक्तदोषापातः—तस्मात् ज्ञापकादिनैवान्त्यस्यतत्कार्यं वारणीयमित्याहुः।

स्वस्य चेति। "स्वं रूपम्" (पा० सू० १।१।६८) इत्यनुवृत्तेः। स्वं रूपं चादेरेव गृह्यते नान्त्यस्य। अन्त्येनेत्यप्रधानतृतीयानिर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्।

आद्योच्चारणमिति। यद्यप्युपदिश्यतेऽनेनेति करणव्युत्पत्त्या शास्त्र-

शब्दरत्न

कथनमेव स्वस्य च रूपस्येति। सञ्ज्ञास्वरूपत्वं विशिष्टस्यास्तु प्रत्येकं स्वबोध्यत्वं चास्तु को विरोधः। यथा "अच्च घेः" [पा० सू० ७।३।११९] इत्यादौ गुणदर्शनेन घिशब्दस्यापि घिसञ्ज्ञाबोद्धयत्वं तद्वत्। एवमजादिसञ्ज्ञा स्वसञ्ज्ञिघटकैकारादिष्विवाकारचकारयोरपि प्राप्नोत्येव। किं च, स्वशब्देन केवलान्त्यपरामर्शासम्भवेऽपि विशिष्टपरामर्शो न बाधकं, तत्र समुदाये फलाभावादवयवयोर्विश्रान्ति प्राप्स्यति। तस्माज्ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम्।

भाष्येति। तत्र हि 'उपदेश इति किम्'। अभ्र आँ अपः, "प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देश" इति "नासानुपदेश" इत्युक्त्वोपदेशोद्देशयोर्लोकव्यवहारेण सङ्कीर्णत्वमाशङ्क्य "उपदेशनेऽजनुनासिक" इति वार्तिककृद्दर्शितन्यासस्य खण्डनाय "उपदेश इति करणे घञुपदिश्यतेऽनेन" इत्युक्तम्। तच्च शास्त्रं शासनकरणं प्रत्यासत्त्यैतच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम्।

तत्त्वाऽऽदर्शः

वस्तुतस्तु माठरपरिवेषणन्यायेनाऽऽद्यन्तातिरिक्तत्वेन आद्यन्तघटितसमुदाये संकोचेन प्राचोक्त स्वशब्दानुवृत्तिप्रकार एव प्रशस्य इति बोध्यम्।

सर्वे ब्राह्मणाः भोज्यन्तां, माठर कौण्डिन्यौ परिवेविषातामिति च तत्स्वरूपम्—एक विधेयतानिरूपितोद्देश्यदलप्रविष्टधर्मयोर्यत्र व्याप्यव्यापकभावस्तत्रायं न्यायः प्रवर्तते, अनेन च व्यापकधर्मावच्छिन्नेव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन संकोचरूपः बाधः क्रियते।

आदित्वञ्च—समुदायविशिष्टत्वम्—वै० च स्वघटकत्व स्वघटकावधिकपूर्वत्व-स्वघटकावधिकोत्तरत्वाभाववत्त्वैतत्त्रितयसम्बन्धेन। एवमेव समुदायविशिष्टत्वमन्त्यत्वम्—वै० च स्वघटकत्वस्वघटकावधिकोत्तरत्व—स्वघटकावधिकपूर्वत्वाभाववत्त्वैतत्त्रितयसम्बन्धेन।

उपदेश इति। 'हलन्त्यम् इतिसूत्रे उपदेशेऽजनुनासिक इत्' इति सूत्रादुपदेश-

मुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातं, तथापि तत्प्रौढिवाद्मात्रम् ।

शब्दरत्न

प्रौढिवाद्मात्रमिति । वार्त्तिककृदुक्तन्यासीयार्थस्य कथञ्चित्सूत्रतोऽपि लाभसम्भवान्न्यासान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः । घञ इति । अकर्त्तरि चेत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः । बाधादिति । वासरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्धः न च तत्र साहचर्येण भावल्युट एव

तत्त्वाऽऽदर्शः

पदानुवृत्तिः । उपपूर्वकदिशधातोर्भावे घञ् तदर्थं आद्योच्चारणम् । आद्यत्वञ्चाज्ञातस्वस्वरूपोच्चारणम् । तथा च श्रावणप्रत्यक्षविषयतावच्छेदकरूपावच्छिन्नविधेयताकोच्चारणमुपदेशः । 'गुप्तिज्किद्भ्यः सन्नित्यत्र श्रावणप्रत्यक्षविषयतावच्छेदक सन्त्वरूपावच्छिन्नविधेयताकोच्चारणं सन्निति तस्योपदेशत्वाद्धलन्त्यमिति नकारस्येत्संज्ञा । भाष्ये प्रत्यक्षमाख्यानमुपदेशोगुणैः प्रापणमुद्देश इत्युक्त्वा उपदिष्टो मे पन्थाः उद्दिष्टो मेऽनुवाक इति लोक व्यवहारे तयो सङ्कीर्णत्वमुपपाद्योपदेशनेऽजनुनासिक इति वार्तिककृन्न्यासखण्डनायोपदिश्यतेऽनेनेति करणघञन्तमुपदेश इति प्रतिपादितम् । तथापि क्तल्युट् तुमुन् खलर्थेषु वासरूपविधिर्नास्तीति निषेधाद्वासरूपन्यायस्याप्रवृत्या ल्युटा बाधात्करणे घञो वक्तुमशक्यत्वात् । न च पुंसि संज्ञायामिति प्रायेण संज्ञायामिति व्याख्यानस्य सत्वाद् घः स्यादिति वाच्यम् । नह्युपाधेरुपाधिर्भवतीतिभाष्याद्गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकांक्षत्वे इतरान्वयस्यायुक्तत्वादिति प्रायेण संज्ञायामित्यस्य वक्तुमशक्यत्वेन घ प्रत्ययस्यासंभवाच्च करणघञन्तप्रतिपादनं प्रौढिवाद्मात्रम् । किञ्च वर्णानुच्चार्योपदिष्टा इमे वर्णा इति भाष्यप्रामाण्यादुपदेशपदार्थस्याद्योच्चारणार्थत्वनिश्चयात्तस्य च भावघञन्तं विनाऽनुपपन्नत्वात् । किञ्च भाष्यकृता हलन्त्यमिति सूत्रे तव्यदित्यत्र यत्किञ्चित्त्वविति समुदायान्त्यस्य वकारस्य प्राप्तेत्संज्ञाऽन्तग्रहणसामर्थ्येन वारिता । उपदेशपदस्य करणघञन्तत्व स्वीकारे तस्य प्रत्ययादिपरत्वेन तवित्यस्य प्रत्ययत्वाभावाच्छङ्कायाऽनुत्थानाद्भाष्यानुपपत्त्योपदेश पदस्य भावघञन्तत्वमेव । अपि च भाष्यकृता आदेच उपदेश इति सूत्रे उपदेशपदाभावे 'गोभ्याम्' नौभ्यामित्यत्रात्वमाशङ्क्य उद्देशश्च प्रातिपदिकानां नोपदेश इत्युपदेश पदस्य सार्थक्यं प्रदर्शितम् । करणघञन्तपक्षे प्रातिपदिकस्याप्युपदेशत्वेन कृतेऽप्युपदेशग्रहणे दोषस्य तादवस्थ्यमिति स्यात् इत्युपदेशपदस्य भावघञन्तत्वमेवेति दिक् ।

करणे घञो दुर्लभत्वात्, ल्युटा बाधात्। न च घः, असंज्ञात्वात्। प्रायेण सञ्ज्ञायामिति व्याख्यानस्य क्लिष्टत्वात्। न ह्युपाधेरुपाधिर्भवतीत्यादिना

शब्दरत्न

ग्रहणमिति वाच्यम्। ईषत्पानः सोमो भवेत्यत्र कर्मणि खल् नेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः। क्लिष्टत्वादिति। गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्वे इतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह—नहीत्यादिना। भाष्यकृतेति। अस्यार्थस्येति शेषः। एवं चोभयप्राप्तौ कर्मणीति नियमान्न कर्त्तरि षष्ठीति बोद्धव्यम्। अवहेलनाच्चेति। चो हेतौ यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः। घापवाद इति। ल्युडपवादश्चेत्यपि बोद्धव्यम्। तत्रापि सञ्ज्ञायामित्यनुवृत्तेरितिभावः।

तत्त्वाऽऽदर्शः

अत्रेदमाकूतम्। नव्याः 'लृटः सद्वा, निष्ठा, राजसूयसूर्य, चित्याग्निचित्ये च, ऐकागारिकट् चौरे' इत्यादि विहित शतृ-शानच्-क्त-क्तवतूनामवयवस्यनिपातनानुमित्तक्यबादीनां पादेश्चेत्त्वानुपपत्त्या, अनुवादे 'चोः कु' रित्यादौच तदनापत्त्या, चरणेभ्यो धर्मवदित्याद्यतिदिष्टप्रत्ययानामित्वानापत्त्या च बाहुलकात्करणे घञोपादानमुपदेशपदे युक्तमेव। यद्यपि 'तौसत्' ३-२-१२७। इत्यत्र शकार ऋकारेत्संज्ञकातः, शकारचकारेत्संज्ञकानस्य च तौ इत्यनेन परामर्शात्तयोरेव संज्ञायां दोषाभावः, एवमेव पकारेत्संज्ञककारेत्संज्ञकयप्रत्ययस्यैव निपातेनानुमानाद्दोषाभावस्तथापि अतिदिष्टप्रत्ययानां चित्रङि ङकारस्येत्संज्ञानापत्तिः, प्राचीनोक्त स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्व, स्वजन्यशाब्दबोधीयत्वोभयसम्बन्धेन पाणिन्युच्चरितपदविशिष्टविधेयताश्रयत्वरूपोपदेशाभावादिति वदन्ति।

वस्तुतस्तु—लृटः सद्वेत्यादिषु दोषस्योद्धृतत्वात्, चोकुरित्यादौ च व्याकरणान्तरीयसंज्ञामादाय निर्वाहाल्लोपश्चेत्यत्र प्रश्लेषसामर्थ्यादित्वकल्पनादइउणित्यादौ उणित्यादेरुकारादि साधुत्वविधायकत्वेनोपदेशत्वात्, चित्रङित्यादौ ङादिति पृथक् पदङ्कृत्वा ङपदस्य ङिति लक्षणाङ्कृत्वा चित्रेति प्रातिपदिकात् क्यच् स च ङिदित्यर्थकरणेनादोषात्भावसाधन पक्ष एव युक्तः। प्रत्युत, करणसाधन पक्षे अइउणित्यत्र विशिष्टस्यार्थवत्वाभावेनाप्रातिपदिकत्वात्, लोपश्चेत्यत्र शस्य प्रातिपदिकत्वेऽपि तद्बोधकत्वाभावाच्चेत्त्वानुपपत्तिरिति बोध्यम्।

भाष्यकृताऽवहेलनाच्च। अत एव घापवादो "हलश्च" ( ३।३।१२१ ) इति घञपीह न। बाहुलकं त्वगतिकगतिः। अत एव प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिरपि परास्ता। तथा च वार्तिकम्—

"अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति"।

अतो भाव एव प्रत्ययो न्याय्य इति भावः॥

यत्तु धातुसूत्रेत्यादि पठन्ति। यच्च व्याचक्षते करणव्युत्पत्त्या-

---

शब्दरत्न

अगतिकगतिरिति। न च "खनो घ च" [ पा० सू० ३।३।१२७ ] इति घविधानमन्यतोऽपीत्यर्थमित्याकरे स्पष्टं, तेनात्र वे सिद्ध्यतीति वाच्यम्। तस्याप्यगतिकगतित्वात्। भगः पदमित्यादौ यत्र विल्वफलं तत्रैव तत्प्रवृत्तेश्च। पदस्य घञर्थे केन सिद्धेनैतदुदाहरणं किं तु काचित्कं वाक्यं तत्, किंचोचार्यवर्णानाह—"उपदिष्टा इमे वर्णा" इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थत्वस्य निर्णयेन, सङ्कीर्णलोकव्यवहारस्य लक्षणयाऽप्युपपत्त्याभावघञि बाधकाभावः।

किं चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्वयेन यत्किंचित्समुदायान्त्यस्य वारणसम्भवे तदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृतो व्यर्थः स्यादिति बोद्धयम्। "उद्देशश्च प्रातिपदिकानां नोपदेश" इति "आदेच उपदेशे" [ पा० सू० ६।१।४५ ] इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति दिक्। धातुसूत्रेत्यादीति।

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः॥ इतीत्यर्थः।

---

तत्त्वाऽऽदर्शः

यत्विति [1]यत्तु—धातुसूत्रगणोणादि वाक्यलिङ्गानुशासनम्।
आगम प्रत्ययादेशा उपदेशाः प्रकीर्तिता॥ इति॥

[2]अथ च कर्म व्युत्पत्त्याऽऽगमादीनां उपदेशत्वम्। करणव्युत्पत्त्या पूर्वार्धोपात्तानामुपदेशत्वम्—इति वदन्ति तदसङ्गतम्—किमेषु योगरूढमुपदेशपदम्, उत योगमात्रम् 'नाद्यः' शास्त्रकारैः संज्ञाया अनुक्तेः, असंज्ञात्वात् घप्रत्ययोनेति भाष्योक्तेश्च।

---

१ प्रक्रियाकौमुदीकाराः-रामचन्द्राचार्याः। २ प्रसादटीकाकाराः-विठ्ठलदीक्षिताः।

पूर्वार्धोपात्तानामुपदेशत्वम् , कर्मव्युत्पत्त्या त्वागमादीनाम् । उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन । एवं गणत्वादेव सिद्धे धातोरपीत्यादि ।

अत्रेदं वक्तव्यम्—किमेषामुपदेशसञ्ज्ञा, उत योगमात्रम् । नाद्यः, संज्ञायाः शास्त्रकारैरनुक्तेः, असंज्ञात्वाद् घप्रत्ययो नेति भाष्योक्तेश्च । अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च, आमोऽमित्वमदन्तत्वादिति स्वपरग्रन्थविरोधाच्च, न ह्युत्सृष्टानुबन्धस्यामो न प्रत्ययत्वं येन मित्त्वं न भवेत् ।

---

शब्दरत्न

उपदेशत्वमिति । उपदेशशब्दव्यवहार इत्यर्थः । धातोरपीति । प्रत्ययेभ्य उणादेरपीत्यपिशब्दार्थः । वाक्यशब्देन वार्तिकम् , शीङ् , लण् , चोरट् , उण् , आचारेऽवगल्भ धुट् , अण् , अनङ् इत्युदाहरणानि ।

उपदेशसञ्ज्ञेति । उपदेशपदं योगरूढमेष्विति भावः । ननु सञ्ज्ञाशब्देन व्यवहार एवाभिमतोऽत आह—आम इत्यादि । न चाकारोच्चारणं व्यर्थम् । तेनास्मत्पक्षज्ञानपनस्यैवौचित्यादिति भावः । आदिना यकारादी चुम्बुप् चणपावित्यादिसंग्रहः ।

---

तत्त्वाऽऽदर्शः

ननु शास्त्रकृत्कृतसंज्ञारूपत्वाभावेऽपि अस्मदादिकृतैव साऽस्त्विति चेन्न अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वे बालकविशेषसङ्केतिते रघुनाथशब्दे 'पूर्वपदात्संज्ञायामगः' इति सूत्रेण णत्वापत्तेः । नच संज्ञाशब्देन व्यवहार एवाभिमत इति वाच्यम् ,

आमोऽमित्वमदन्तत्वादगुणत्वं विदेस्तथा ।
आस्कासोराम्विधानात्पररूपंकदन्तवत् ॥ इति ॥

स्वपरवृत्तिग्रन्थविरोधात्, उत्सृष्टानुबन्धाम्यपि प्रत्ययत्वसत्वाच्च । चो हेतौ बोध्यः ।

किञ्चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वपक्षे सनःसनेवादेशोऽस्त्वित्याशंक्य आदेशस्योपदेशाभावादित्संज्ञा नस्यादिति भाष्य-कैयटाद्युक्तं व्याकुप्येत । नच 'अथवा नानुत्पन्ने सनि प्रकृत्या भवितव्यमित्यादिना भाष्ये एव दूषितत्वेन पूर्वोक्तमसङ्गतमिति वाच्यम्, न धातुलोप इति सूत्रभाष्ये धातुग्रहणं किम् ?

किं चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे सनः सनेवादेशोऽस्त्वि- त्याशङ्क्योपदेशाभावादित्सञ्ज्ञा न स्यादिति भाष्यकैयटोक्तं व्याकुप्येत।

किञ्च "न धातुलोपः" ( पा० सू० १।१।४ ) इतिसूत्रे "धातुग्रहणं किम्? लूञ् लविता पूञ् पविता" इति भाष्यम्, उपदेश एवानुबन्ध- लोपे कृते ततो धातुसञ्ज्ञेत्येवम्परः कैयटग्रन्थश्च विरुद्ध्येत।

अपि च, "घ्वसोरेद्धौ" ( पा०सू० ६।४।११९ ) इति सूत्रे लोपश्श्चेतिद्वि- शकारको निर्देशः, द्वितीयः शकार इदिति अलोऽन्त्यसूत्रस्थभाष्यकैयटादिक-

---

शब्दरत्न

उपदेशाभावादिति। आदेशस्योपदेशाभावादित्यर्थः। ततो धातुसञ्ज्ञेति। लूशब्द एव धातु सञ्ज्ञकः केवलमसौ ञित्कार्यं लभत इति भावः।

नन्वत्र सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठितानु- पूर्वीकाणां ग्रहणम् तेषां धात्वादिव्यवहारस्तु भाविसञ्ज्ञाविषयघटितत्वेन धातुपाठ इत्यादिव्यवहारवदिति चेन्न। आद्योच्चारणविषयाणामित्येव सिद्धे एतस्यानुसंयोगात्। अत एव वाऽरुचेराह—अपिचेति।

---

तत्त्वाऽऽदर्शः

लूञ्—'लविता', पूञ्—'पविता' इति उपदेश एवानुबन्धलोपे कृते ततो धातुसंज्ञे- त्येवंपर कैयटग्रन्थविरोधात्।

ननु धातुसूत्रगणेत्यत्र सूत्रसाहचर्यात् धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणि- न्यादिपठितानुपूर्वीकाणां ग्रहणं भाविसंज्ञाविषयघटितत्वेन धातुपाठ इत्यादि व्यव- हारस्तथा तेषामपिधात्वादिव्यवहार इति न कैयटग्रन्थविरोध इतिचेन्न, 'घ्वसोरेद्धा- वभ्यासलोपश्चे'ति सूत्रे लोपश्श्चेतिद्विशकारकोनिर्देशः, द्वितीयः शकार इदिति 'अलोऽन्त्यात्पूर्व उपधा' इति सूत्रस्थ भाष्यकैयटादिविरोधस्य जागरूकत्वात्।

किञ्चैतत् पक्षे "नमोवरिवश्चित्रङः क्यच्" इत्यस्यासंग्रहः स्यादिति बोध्यम्, एञ्वेतस्य रूढिरित्युक्तेः परिगणनताया एवलाभात्।

न द्वितीयः योगस्यैव स्वीकारे परिगणनस्य व्यर्थत्वात् भाष्यरीत्या करण- व्युत्पत्त्यैव सर्वसंग्रहात्, व्युत्पत्तिवैचित्र्यस्य दुरुपपादत्वाच्च।

मपि विरुद्ध्येत। न द्वितीयः। योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात्। धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च। उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यवच्छिन्नसमुदायान्त्यं हलिदित्यर्थ इति स्वग्रन्थविरोधाच्च। पक्षद्वयेऽपि लिङ्गानुशासनस्य प्रकृतानुपयोगात्। लोपश्शपश्चेति शकारस्यासंग्रहाच्च। "आदेच उपदेशे" ( पा० सू० ६।१।४५ ) "उपदेशेऽत्वतः" ( पा० सू० ७।३।६२ ) इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः सर्वसम्मतत्त्वाच्चेति दिक्॥

---

## शब्दरत्न

अलोऽन्त्यसूत्रेति। उपधासञ्ज्ञासूत्रेत्यर्थः। विरुद्ध्येतेति। तत्र हि लोपशिति भिन्नं पदं शिति च। पूर्वस्य श्चुत्वेन शः। असन्देहाय झल्परसंयोगादित्वेऽपि "स्कोः" [ पा० सू० ८।२।२९ ] इत्यस्य न प्रवृत्तिः। "झलां जश्" [ पा० सू० ८।४।५३ ] इत्यादौ जश्त्वस्येव। शकारस्य धात्वाद्यन्तत्वाभावः स्पष्ट एवेति भावः।

किं च "नमो वरिवश्चित्रङ" [ पा० सू० ३।१।१९ ] इत्यस्यासङ्ग्रहोऽत्र पक्षे इत्यपि बोध्यम्। एतेनैतस्य रूढिरित्युक्तेः परिगणनताया एव लाभात्। योगस्यैवेति। न तु रूढेरित्यर्थः। परिगणनस्येति। धात्वादिगणनस्येत्यर्थः। वैषम्येति। भाष्यरीत्या करणव्युत्पत्त्यैव सर्वसङ्ग्रहादितिभावः। उपदेशताप्रयोजकेति। योगमात्रस्वीकारे उपदेशता—उपदेशकरणता, न हि तत्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः। सञ्ज्ञात्वे तु उपदेशता—उपदेशशब्दत्वम्, उपदेशशब्दस्य शब्दपरत्वात् [illegible] तया धातुत्वादि वक्तुं शक्यमिति भावः। शकारस्येति। नह्यनेन किञ्चिदुपदिश्यत इतिभावः। ननूपदिश्यते ज्ञाप्यतेऽनेनेति तदर्थः, धात्वादिभिर्हि प्रयोगो ज्ञाप्यते तद्वदनेनापि शकारेण सर्वादेशत्वं ज्ञाप्यते, इत्यरुचेराह—आदेच इति। सर्वेति। भाष्यकारादीत्यर्थः। यत्र तु करणव्युत्पत्त्यैवार्थसङ्गतिः, तत्रागत्याऽस्तु "कृत्यल्युट" [पा० सू० ३।३।११३] इति बाहुलकाल्ल्युडभावः। यथा 'यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तौ" इत्यादाविति दिक्।

---

## तत्त्वाऽऽदर्शः

किञ्च उपदेशशब्दस्य धात्वादिषु योगरूढिस्वीकारे उपदेशस्य धात्वाद्यन्यतमत्वस्य च समनियतत्वेन धात्वाद्यन्यतमत्वं तत्पदव्यवहार्यताप्रयोजकं भवति,

"उपदेशेऽजनुनासिक इत्" ( पा० सू० १।३।२ ) यद्यप्यत्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थत्वाद् 'अनुनासिकसञ्ज्ञासूत्रं मन्दप्रयोजनम्' इति ध्वनयितुं नेहोपन्यस्तम्। उपदेशे किम् ? अभ्र आँ अपः यद्यपीह "उञः" "ऊँ" ( पा० सू० १।१।१७।१८ ) इत्यत्रैव विधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्यं कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्।

---

शब्दरत्न

नासिकामनुगत इति। नासिकामभिहत्य वायुनाऽभिव्यञ्जित इत्यर्थः। प्रातिशाख्यशिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम्।

अत एव मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकव्यवहारः सूत्रमते सङ्गच्छते। "यरोऽनुनासिके" [ पा० सू० ८।४।४९ ] इत्यादौ स्वरूपग्रहणाभावस्तु "पशुः" "अपत्यम्" इत्यादिवदिति ध्येयम्। मन्दप्रयोजनमिति। मन्देषु प्रयोजनमस्येति बहुव्रीहिः। एवंविधयोगलोकप्रातिशाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः। अभ्र आँ अप इति। अत्रेत्सञ्ज्ञायां लोपः स्यादिति भावः।

---

तत्त्वाऽऽदर्शः

यदि च योगमात्रस्वीकारस्तदोपदेशस्यान्यत्रापि सत्त्वेन धात्वाद्यन्यतमत्वस्य समनियतत्वाभावेन तत्पदव्यवहार्यताप्रयोजकं न स्यादिति बोध्यम्।

उपदेशेऽजनुनासिक दिति। नन्वादौ उपजीव्यत्वात् अनुनासिक संज्ञासूत्रं प्रथमं वक्तुमुचितमितिचेन्न, भाष्यकृता प्रासादवासिन्यायेन अनुनासिकसंज्ञा सूत्रे मुखग्रहणं प्रत्याख्यातम्, तथा च 'अनुस्वारयमानाञ्च नासिकास्थानमिष्यते' इति शिक्षोक्तेः भाष्यमते यमानुस्वारयोः अनुनासिकसंज्ञा भविष्यति, सूत्रकृन्मते च सति मुखग्रहणे तयोरनुनासिकसंज्ञा न भविष्यति, इति आरम्भप्रत्याख्यानयोः फलैक्याय नासिकामभिहत्य वायुनाऽभिव्यंजित इत्यर्थक नासिकामनुगत अनुनासिक इति योगाश्रयणेनैव गतार्थत्वात्।

ननु अनुनासिक संज्ञा सूत्राभावे अनुनासिक इत्यस्य शब्दशास्त्रीय संज्ञात्वाभावेन स्वंरूपमिति सूत्रस्थाशब्दसंज्ञेत्यस्याप्राप्त्या 'यरोऽनुनासिक' इत्यादौ स्वंरूपमिति शास्त्रात् अनुनासिकपदेन स्वरूपग्रहणापत्तिरितिचेन्न 'हरतेर्दृतिनाथयोः पशौ', 'तस्यापत्यम्' इत्यादौ पश्वपत्यादिपदेष्विव व्याख्यानत अत्रापि स्वरूपाग्रहणसिद्धेः।

अच् किम् ? मनिनो मकारस्य मा भूत्। प्रतिज्ञायते इति प्रतिज्ञा। "आत-श्चोपसर्गे" ( पा० सू० ३।३।१०६ ) इति कर्मण्यङ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। एवं च 'प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणा' इति क्लिष्टं व्याख्यानं नाश्रयणीयम्। "पाणिन्युपज्ञं व्याकरणम्" इत्यादिष्विव लक्षणां विनैव निर्वाहात्। यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परि-

शब्दरत्न

विधानेति। इदिति वक्तव्येऽनुनासिकविधानसामर्थ्यादित्यर्थः नेत्त्वमिति। तत्फल-लोपस्य सामर्थ्यादभावे इत्त्वमपि फलाभावान्नेत्यर्थः।

ननु 'अभ्र आँ अदितः' इत्यत्र "अनेकान्ता अनुबन्धाः" इति पक्षे "आदि-तश्च" [ पा० सू० ७।२।१६ ] इतीट्प्रतिषेधः फलम्। न च लोपाभावे इदिति-महासञ्ज्ञाकरणात्संज्ञाऽपि नेति वाच्यम्। महासञ्ज्ञयैव लोपसिद्धया "तस्यलोपः" [ पा० सू० १।३।९ ] इत्यस्य वैयर्थ्यापत्तेः। "इक्" इत्यादौ ककारादिश्रवणाना-पत्तेश्च, इति चेन्न। "अनुबन्धानामेकान्तत्वमेव"। इति मुख्यपक्षे दोषाभाव इत्या-शयात्। तदा हि मुख्येऽवयविन्यन्यपदार्थे बहुव्रीहिः। न चायमाकारोऽट्धातोरवयवं इत्यदोषात्। प्रतिज्ञेति। प्रतिज्ञानविषय इत्यर्थः। प्रतिज्ञाशब्दस्येति। भावाङन्त-स्येत्यर्थः। क्लिष्टेति। शक्तिग्राहकव्याकरणसत्त्वाच्छक्त्यैव तदर्थबोधसम्भवे लक्षणा-श्रयणं क्लेश इति भावः। लक्षणां विनैवेति। अत्र लक्षणया व्याख्यानं कुर्वताऽपि तत्र लक्षणां विना मदुक्तरीत्यैव व्याख्यातम्। एवं च पूर्वापरविरोधस्तस्येति भावः। न चोभयोर्विधानेऽपि लाघवाद्भावे शक्तिः, कर्मणि लक्षणा, अनुशासनमपि लाक्षणि-कार्थानुशासनमेवेति वाच्यम्। "लः कर्मणि" [ पा० सू० ३।४।६९ ] इत्यादीना-

तत्त्वाऽऽदर्शः

नन्वत्रोपदेशग्रहणम्व्यर्थमितिचेन्न 'अभ्र आँ अपः' इत्यादौ इत्त्वाभावाय तदावश्यकत्वात्। नच 'उञः' 'ऊँ' इत्यत्रैव विधानसामर्थ्यात् इत्त्वफललोपस्य व्यापकस्याभावात् व्यापकाभावेन व्याप्याभाव इति नियमात् नेत्त्वमिति वाच्यम्, एवमपि उत्तरार्थं तदावश्यकत्वात्। यद्यपि अनेकान्ता अनुबन्धा इत्यस्थित पक्षे 'अभ्र आँ अदितः' इत्यादौ 'आदितश्च' इतीट् प्रतिषेधः फलम्, तथापि अनुबन्धाना-मेकान्तत्वमेवेति मुख्यपक्षेऽस्याऽऽकारस्याट्धातोरनवयवत्वेनादोष इति बोध्यम्॥

भ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः। ननु रलयोरिति न्यूनम्। टकारस्यापि मध्यगतत्वादित्यत आह—प्रत्याहारेष्विति। व्यवह्रियन्ते इति। प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ्। यद्यपि योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापियोगरूढिरिति भावः। प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः। चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः। तेन सुप्तिङादीनां, रप्रत्याहारस्य, "चयो द्वितीया" इतिवार्तिकस्थचयूप्रत्याहारस्य चाधिक्येऽप्यदोषः।

यत्तु "ञमन्ताड्डः" इति, "यमिञमन्तेष्वनिडेक इष्यते" इति च ञम् वार्तिककृता व्यवहृत इत्याहुः, तद्भ्रमसाभिधानम्। आद्यस्योणादिसूत्रत्वात्,

---

शब्दरत्न

मपि तथात्वापत्तौ 'तिङां कर्त्रादौ शक्तिः' इतिसिद्धान्तासङ्गत्यापत्तेः। व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्य भङ्गापत्तेश्च।

टकारस्यापीति। अत्र यद्वक्तव्यं तदन्यत्रोक्तम्। बाहुलकादिति। भावघञन्तादर्शआद्यजित्यपि बाहुलकादविशिष्टमिति भावः। एकचत्वारिंशदिति।

"एकस्मान् ङञणवटा, द्वाभ्यां ष, स्त्रिभ्य एव कणमाः स्युः।
ज्ञेयौ चयौ चतुर्भ्यो, रः पञ्चभ्यः शलौ षड्भ्यः॥ इति तदुक्तेरिति भावः।

---

तत्त्वाऽऽदर्शः

ननु 'उरण् रपर' इति सूत्रेण तवल्कार इति प्रयोगे लपरत्वसिद्ध्यर्थं लण् सूत्रेऽकारस्यानुनासिकत्वम्। एवञ्च रप्रत्याहारे सिद्धे तैनैव तवल्कार इत्यत्र लपरत्वसिद्धिः, मानञ्चात्र तुल्यास्य सूत्रे 'क्वचिदनन्त्येनापि प्रत्याहार' इति कैयटीयव्याख्यानशालिभाष्यमेव, तथाच सूत्रे रपदेन रलयोर्ग्रहणम्। नच टकारस्यापि मध्यगतत्वात् रटलानामिति भाव्यम्, अत आह—प्रत्याहारेष्विति। मानञ्चात्र 'एङिपररूप'मिति सूत्रे एङीति निर्देशः, अन्यथा ङकारस्याप्यच् प्रत्याहारे ग्रहणसत्त्वेनायादेशापत्तिः। अत्र प्रत्याहारशब्दे योगरूढिरिति बोध्यम्। ते च प्रत्याहारा एकचत्वारिंशत्। यद्यपि सुप्तिङादिरप्रत्याहाराणामाधिक्यात्परिगणनमयुक्तमिव भाति, तथापि तस्य चतुर्दशसूत्रीस्थ हल्भिरिदिभिः कृता एकचत्वारिंशदिति तात्पर्यमितिबोध्यम्। इति प्राञ्चः।

द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वात्; इत्यास्तां तावत्। एष च सङ्ख्या-नियमोनातीवोपयुज्यत इत्युपेक्षितः।

---

तत्त्वाऽऽदर्शः

अर्वाञ्चस्तु—'लण्' सूत्रस्थाकारस्यनानुनासिकत्वमन्यथाऽतोल्रान्तस्ये'ति सूत्रे पाणिनि प्रोक्त लकारोच्चारणस्य वैयर्थ्यं स्यात् रप्रत्याहारेणैव तन्निर्वाहात्, यद्यपि रषाभ्यामिति सूत्रे यथा ष साहचर्येण रेफस्यैवग्रहणं न प्रत्याहारस्य, तथाऽतोल्रान्तस्येति सूत्रेऽपि अत्साहचर्येण रेफस्यैव ग्रहणं भविष्यति न रप्रत्याहारस्य, अतः आलीदित्यत्र वृद्ध्यर्थं लग्रहणमावश्यकमेव तथापि रप्रत्याहार सत्वे इको यणचीत्यादि यण् पद-घटित सर्वसूत्रेषु अर्धमात्रालाघवाय यप्रत्याहारेणैव व्यवहारस्य समुचितत्वेन यण् प्रत्याहाराश्रयणस्य वैयर्थ्यापत्तिः, "आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" इति भाष्योक्त तृतीयहेतोरव्यापकतापत्तिः, प्रत्याहारे जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन हल् प्रत्याहारसिद्धेः प्रागचपदार्थ निष्पत्त्यभावेन उपदेशेऽजित्यस्य वाक्यार्थाभावेन लणित्यकारस्येत्संज्ञालोपयोरभावेन हल् प्रत्याहारे लणित्यकारप्रवेशे 'मा मौंस्त्रायस्वे-त्यत्रानुनासिकपक्षेऽनुस्वारापत्तिः। सोऽस्तीत्यादौ सुलोपाद्यापत्तिश्च। तस्मात् ऋऌवर्णयोः सावर्ण्यवदुरण्रपर इत्यत्र ल ग्रहणं कर्त्तव्यमेवेति वदन्ति।

वस्तुतस्तु—रप्रत्याहारकरणमेव सम्यक्, 'उरण्रपर' इति सूत्रे लकाराकरणजलाघवात्। अतएव भाष्यकृता लपरत्वं वक्ष्यामीत्युक्त्वापि पुनर्नोक्तम्। तृतीय हेतोरव्यापकतापत्तिस्तु नास्त्येव, प्राचांमते इत्संज्ञावत्वस्यैवानुबन्धत्वेन हल् प्रत्याहार-सिद्धेः प्राक् लणोऽकारे तदभावेन पक्षतावच्छेदकानाक्रान्तत्वात्। किञ्च स्वनये उच्चारणार्थानामरीत्संज्ञालोपाभ्यामेवापहारस्य 'दिवऔ'दिति सूत्रे वक्ष्यमाणत्वेन हयवरेत्यादिघटक सकलोच्चारणार्थकाकारेषु हल् प्रत्याहारसिद्धेः प्राक् लोपशास्त्रीये-त्यादि निरुक्तहेतोरभावेनाव्यापकत्वापत्तिः। हल् पदेनाकारग्रहणे 'मा मौंस्त्रायस्वे'ति दोषापत्तिश्चैतन्मते दुर्वारा। यद्यपि द्वयोर्व्यञ्जनयोर्मध्ये एकैकाकारोच्चारणे कर्तव्ये प्रतिव्यञ्जनमकारोच्चारणसामर्थ्यात्तुल्यजातीयानित्यादि भाष्याच्च प्रत्याहाराणामाद्यशब्दसजातीयमध्यपातिबोध्यबोधकत्वं स्वीकार्यमिति कल्पनेन हयवरडित्यादि घटकाकारेष्विव लण् घटकाकारेऽपि बोधकत्वेनाचार्यतात्पर्यविषयत्वाभावेनैव मा मौंस्त्रायस्वेत्यत्र दोषवारणमुभयमतेऽपि तुल्यमेव, तथापि इत्संज्ञायोग्यत्वात्मकानुबन्धत्वाभ्युपगमात्तृतीयहेतोरव्यापकतापत्तिसहनमेतन्मते गौरवमादधातीतिबोध्यम्।

"ऊकालोऽच्" ( पा० सू० १।२।२७ ) ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः। सौत्रं पुंस्त्वम्। वां काल इवेति। फलितार्थकथनमिदम्। विग्रहस्तु वः कालो यस्येति बोध्यः। ऊशब्देन स्वोच्चारणकालो लक्ष्यते। आये इति।

---

शब्दरत्न

सौत्रं पुंस्त्वमिति। यद्यपि इतरेतरयोगेऽपि सौत्रमेकवचनं वक्तुं शक्यं, तथापि "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य" लौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितं, न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः। फलितार्थेति। ऊपदेन स्वोच्चारणकालसदृशलक्षणया कालशब्देन समानाधिकरणबहुव्रीहौ तत् फलतीति भावः। वां काल इति तु न विग्रहो व्यधिकरणत्वादत आह—विग्रहस्त्विति। काल इति जात्याख्यायामेकवचनम्। स्वोच्चारणकाल इति। स्वोच्चारणकालसदृश इत्यर्थः। सादृश्यमूलके कालयोरभेदाध्यवसाये तु यथाश्रुतमेव साधु।

---

तत्त्वाऽऽदर्शः

ऊकालोऽजिति। कुक्कुटरुते उकारे एक द्वि त्रि मात्रत्वप्रसिद्धेर्वर्णसमाम्नायेऽच् प्रत्याहारे प्रथमत अकारोपादानेऽपि अत्र सूत्रे तन्नोक्तमितिभावः। ऊ इति एक द्वि त्रि मात्राणां क्रमेण प्रश्लेषनिर्देशो व्याख्यानात्। प्रश्लेषे संज्ञात्रयकरणमेव व्याख्यानम्, नह्येकस्य संज्ञिनोऽनेकाः संज्ञाः युज्यन्ते, संज्ञाकरणस्यलघ्वर्थत्वात्। तेन स्वोच्चारणकालसदृशो लक्ष्यते, वां काल इव कालो इति तु फलितार्थकथनपरम्, वः कालो यस्येति समानाधिकरण बहुव्रीहिरत्र बोध्यः। नच विभिन्न वचनत्वेन कथं सामानाधिकरण्यम्, जात्याख्यायामिति सूत्रेण जातावेकवचनत्वात् तत्सिद्धेः। अत्र सूत्रे ह्रस्वदीर्घप्लुतशब्दे समाहारद्वन्द्वसमासोनेतरेतरयोगः, तत्सत्त्वे बहुवचननिर्देशापत्तिः। नच समाहार द्वन्द्वे 'स नपुंसक'मिति सूत्रेण नपुंसकत्वापत्तिः, 'छन्दोवत्सूत्राणि भवन्ति' 'दृष्टानुविधिश्छन्दसि' इत्यादि वचनेन सौत्रत्वात्पुंस्त्वस्यैव युक्तत्वात्। यद्यपि इतरेतरयोगसमासेऽपि पूर्ववदेव सौत्राश्रयणादेकवचनेकृते निर्देशसिद्धिः सेत्स्यति, तथापि 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति वार्तिकोक्तेर्लिङ्गव्यत्ययकल्पनमुचितम्, यतो हि तस्यानित्यत्वात्, नतु शास्त्रीयवचनव्यत्ययकल्पनं युक्तम्, यतो हि शास्त्रेणैव शास्त्रस्बाधनीयमिति शास्त्रीयबाधे वचनङ्कल्प्यम्, लोकव्यवहारबाधने तु तस्यानित्यत्वान्न वचनकल्पनापेक्षेतितत्वम्।

"निपाता आद्युदात्ता" ( फि० सू० १२ पा० ४ ) इत्याकार उदात्तः । यच्छब्दस्तु फिट्सूत्रेण । अर्वाङ् इति । अकारोऽनुदात्तः ।

तस्यादितः ( पा० सू० १।२।३२ ) । अतन्त्रमिति । "उपेयिवान्" इत्यत्रोपसर्ग इवाविवक्षितमित्यर्थः ।

ननु तत्र "ईयिवांसमतिस्रिध" इत्यादिप्रयोगदर्शनादविवक्षाऽस्तु । इह त्वविवक्षायां प्रमाणं किम्? इति चेल्लक्ष्यदर्शनं प्रातिशाख्यादिकं चेति गृहाण ।

---

शब्दरत्न

फिट्सूत्रेणेति । अन्तोदात्त इत्यर्थः । जसः सुप्त्वादनुदात्तत्वम् । "एकादेश उदात्तेन" [पा० सू० ८।२।५] इत्येकार उदात्त इति भावः । अनुदात्त इति । फिट्स्वरेणान्तस्योदात्तत्वे शेषनिघातेनेति भावः । अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमर्वाङिति । अविवक्षितमित्यर्थं इति । इदं च वक्ष्यमाणं प्रातिशाख्यं यच्छाखायां, तच्छाखास्थ-

---

तत्त्वाऽऽदर्शः

तस्यादिति इति । उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञको भवति । तत्र कियानंश उदात्तस्य, कियान्वांशः अनुदात्तस्य एतद्बोधनार्थमिदं सूत्रम् । अत्रार्धह्रस्वमिति पदम्, ह्रस्वस्यार्धमिति 'अर्धं नपुंसक'मिति सूत्रेणैकदेशिसमासेऽर्धशब्दस्य पूर्वनिपाते सिद्धम्, तथाच ह्रस्वस्वरितस्यार्धमुदात्तं भवति इति सूत्रार्थाद्दीर्घस्वरितस्यार्धमुदात्तन्नस्यादतः मनोरमाकारा अत्र ह्रस्वग्रहणमतन्त्रमिति निगदन्ति । यथा 'उपेयिवाननाश्वाननूचानश्चेति' सूत्रे यद्यपि सोपसर्गउपेयिवानिति पठितन्तथापि 'ईयिवान्' 'समीयिवान्' इत्यादि क्वसुप्रत्ययान्तनिरुपसर्गक तथाऽन्योपसर्गकेण धातोः प्रयोगदर्शनेन तत्र सूत्रे उपेत्यस्याविवक्षितत्वन्तथैव प्रकृतेऽपि अर्धह्रस्वशब्दे ह्रस्वशब्दोऽविवक्षितः, एवञ्च यस्य कस्यापि स्वरितस्यादित अर्धमुदात्तम्भवति इति सूत्रार्थः । नच दृष्टान्तदार्ष्टान्ते वैषम्यम्, तत्र हि 'ईयिवांसमतिस्रिध' इति प्रयोगदर्शनमुपेत्यस्याविवक्षितत्वे मानम्, प्रकृतेऽविवक्षितत्वे न किमपि मानमितिवाच्यम् 'येऽरा' इत्यत्र दीर्घस्वरितसत्वेऽपि प्रथमार्धोदात्तत्वोच्चारणस्य प्रातिशाख्यस्य च मानत्वात् । प्रातिशाख्ये हि 'तनूनपात्' 'शचीपति'मित्यत्र पदपाठे ऊदीतौ

तथा हि—येऽ॑ा इत्यत्रैकारः, 'तनूनपात्' 'शचीपतिम्' इत्यत्र पदपाठे ऊदीतौ चार्धोदात्तौ इति सकलबह्वृचप्रसिद्धम्। तनूनपाच्छचीपतिशब्दयोः "उभे वनस्पत्यादिषु युगपत्" इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्" (पा० सू० ६।१।१५८) इति शेषनिघातः। पूर्वपदभूतयोस्तनूशची एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम्।

"जात्यवद्वा तथा वाऽन्तौ तनूशचीति पूर्वयोः" इति।

---

शब्दरत्न

वैदिकोदाहरणविषयम्। तनूनपाच्छचीपतिशब्दयोरिति। अस्य यद्यपीत्यादिः। शेषनिघात इति। अस्य तथापीतिशेषः। तेनौदीतौ अनुदात्तौ प्राप्नुत इति भावः। जात्यवद्वेति। पूर्वपदभूतयोस्तनूशचीशब्दयोरन्तौ जात्यवदिति।

अतोऽन्यत्स्वरितंस्वारं जात्यमाचक्षते पदे।

इति लक्षितो जात्यः। उदात्तस्वरितपूर्वस्वरितादन्य एकपदे स्थितः स्वरितो जात्य इति तदर्थः तेन तुल्यं तद्वत्, अस्यान्त उदात्तश्रुतिक इत्यर्थः। तथावा असंहितवद्वा—संहितवद्वेत्यर्थः।

पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान्।

---

तत्त्वाऽऽदर्शः

चार्धोदात्तावित्युक्तम्। शौ० प्राति० (३) पटल (१६ का०) अतोऽन्यत्स्वरितंस्वारं जात्यमाचक्षतेपदे। जात्यवद्वातथावान्तौतनूशचीतिपूर्वयोः इति। एवमेव स्वरितार्धस्योदात्तत्वे प्रातिशाख्यम्प्रमाणम्, 'एकाक्षरसमावेश' इत्यादि। अत्र ह्रस्व स्वरितांशेऽर्धमात्रोदात्ता, दीर्घस्वरितांशेऽर्धमुदात्तम्। कारिकायां अर्धमेवेत्यत्र एवकारदर्शनेन दीर्घांशेऽप्यर्धमुदात्तम् (अर्थात् एकमात्रोदात्ता, अन्याऽनुदात्ता इति।)

किञ्च सूत्रे ह्रस्वशब्दस्य संकेतितविषयमात्राकालिकाजवर्णपरत्वेन कर्मधारयसमासे लक्ष्यासंग्रहः, एकदेशिसमासे च लक्ष्यासिद्धिरुक्तैव, सूत्रे तस्येति षष्ठीनिर्देशानुपपत्तिश्च, तथाहि सति तत्रेति वक्तव्यं स्यात्। अर्थान्तरपरत्वन्तु न युक्तम् कृत्रिमाकृत्रिमन्यायविरोधात्। तस्माध्रस्वग्रहणमविवक्षितमेवेतिप्राञ्चः प्रोचुः।

---

१ स्वरितविशेषोजात्यः। उक्तञ्च प्रातिशाख्ये—ततो मृदुतरौ स्वारौ जात्यक्षैप्रावुभौस्मृतौ इति। स्वरितस्योत्तरार्धोऽतिमन्द प्रयत्नोच्चारितो यः स जात्य इति तदर्थः।

तथा स्वरिताद्र्धस्योदात्तत्वे प्रातिशाख्यमपि—

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्धमात्राऽर्द्धमेव वा ॥
अनुदात्तः परः शेषः, स उदात्तश्रुतिर्न चेत् ।
उदात्तं वोच्यते किञ्चित्स्वरितं वाऽन्तरं परम् ॥ इति ॥

अस्यार्थः—पूर्वयोरुदात्तत्वानुदात्तत्वयोरेकत्र समावेशे सति स्वरितो बोद्धयः । तस्य स्वरितस्य स्वतन्त्रोदात्तापेक्षयोदात्ततराऽर्द्धमात्राबोध्येति । "क्वोऽश्वाः" इत्यादि ह्रस्वाभिप्रायम् । "अर्द्धं वा" इति दीर्घाभिप्रायम् । अनेनैव ह्रस्वस्यापि सङ्ग्रहाद्व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेव-कारः । "अनुदात्त" इत्यादि परिशेषसिद्धार्थकथनम् । सः–शेषः उदात्तश्रुतिः स्यात् । किमविशेषेण ? नेत्याह–न चेदित्यादि । उदात्तस्वरितपरं विहायेत्यर्थः ।

---

शब्दरत्न

इत्युत्तरमस्य पाठात् । असंहितवदित्यनेन केवलमनुदात्तत्वम् । संहितवदित्यने-नार्धानुदात्तस्वरितत्वमिति तद्भाष्ये स्पष्टम् । तथेति । लक्ष्यदर्शनवत्प्रातिशाख्यमपि प्रमाण-मस्तीत्यर्थः ।स्वतन्त्रोदात्तापेक्षयेति । श्लोके "उदात्तादिति" स्वतन्त्रोदात्तादित्यर्थकमिति भावः । एवकार इति । तच्छाखायां दीर्घादिष्वपि समांशोदात्तकस्वरितस्यैव पाठादिति भावः । एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तम् । वाशब्दस्तु पादपूरणायेति बोद्धयम् ।

---

तत्त्वाऽऽदर्शः

अत्र नव्याः—'अतन्त्र' मित्यस्य स्वशास्त्रसङ्केतितरूपेण नार्थबोधजनकमित्यर्थः, अपितु अर्धमात्रारूपार्थबोधजनकम् । 'अर्धह्रस्वशब्दोऽर्धमात्रायांरूढ' इति भाष्य-प्रामाण्यात् । हरिरप्याह—प्रमाणमेव ह्रस्वादावनुपात्तंप्रतीयते इति । अनुपात्त-मित्यस्य अर्धमात्रारूपम्प्रमाणमेवोपलक्ष्यत इत्यर्थं हेलाराजोऽप्याह । एवञ्च दीर्घा-दावप्यर्धमात्रोदात्ता, सार्धमात्राऽनुदात्ता । प्रातिशाख्यादिकन्तु बह्वृच् शाखापरमेव, तच्छाखायां दीर्घादिषु समांशोदात्तकस्वरितस्यैवपाठः, तैत्तिरीयशाखायान्दीर्घस्वरितो-दाहरणेऽर्धमात्रोदात्तस्यैवोच्चारणात् । किञ्च अर्धमेववेत्यत्र वा इतिपदसत्त्वेन ह्रस्व-स्वरितेऽर्धमात्रोदात्ता, दीर्घस्वरिते समांशोदात्तत्वमिति वैकल्पिकविधानमिति कथनं न युक्तम् तत्र वा शब्दस्य पादपूरणार्थत्वादित्याहुः ।

शाकल्योऽप्याह—

"अप्राकृतस्तु[1] यः स्वारः स्वरितोदात्तपूर्वगः ।
उदादायार्द्धमस्याथ शिष्टं निघ्नन्ति कम्पितम् ॥ इति ॥

उदादाय—उदात्तं कृत्वा । 'अर्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यते' इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथंचिन्नेयाः । क्वेति । किमोऽत् । तित् स्वरितम् । व इति । "अनुदात्तं सर्वमपादादौ" ( पा०सू० ८।१।१८ ) इत्यधिकारादनुदात्तम् । अश्वा इति । अशेः क्वनि नित्स्वरेणाद्युदात्तम् । संहितायां तु "एकादेश उदात्तेनोदात्तः" ( पा० सू० ८।२।२५ ) इत्योकार उदात्तः । ये अरा इति । द्वयमपि फिट्सूत्रेणान्तोदात्तम् । एकादेशस्तु पक्षे स्वरितः । "स्वरितो वाऽनुदात्ते पदादौ" ( पा० सू० ८।२।६ ) इत्युक्तेः ।

---

शब्दरत्न

अप्राकृत इति । स्वरित इत्यर्थः । स्वार इति । स्वर एव स्वारः । स्वार्थेऽण् । स्वरितोदात्ताभ्यां पूर्ववर्णग इत्यर्थः । लक्ष्यते इति । तदुक्तं भाष्ये—"अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः" इति । हरिरप्याह—

"प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते" इति ।

अनुपात्तमपि अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यत इत्यर्थं तस्य हेलाराज आह । एवं च लोकेऽन्यशाखासु च दीर्घानिष्वप्यर्धमात्रैवोदात्तेति भावः मतान्तरेति । प्रातिशाख्योक्तमतापेक्षयेतरवेदलोकसाधारणमतान्तरेत्यर्थः । कथंश्चिदिति । लक्ष्यतेइत्यंशपरमिदम् । भाष्यतो रूढिशक्तेरेव प्रतीतेरिति भावः । इत्युक्तेरिति । "नोदात्तस्वरितोदयम्" [ पा० सू० ८।४।६७ ] इति निषेधस्तु "उदात्तादनुदात्तस्य" [ पा० सू० ८।४।६६ ] इत्यस्यैव, "अनन्तरस्य" इति न्यायादिति भावः ॥

---

(१) अप्राकृत इति । स्वरितो द्विधा, प्राकृतोऽप्राकृतश्च । तत्राद्यः 'उदात्तादनुदात्तस्ये' पा० ८।४।६६ । इति विहितः । तच्छेषस्यैकश्रुतिर्नियता । अग्निमीळे, प्रत्यग्ने इत्यादि । गार्ग्यादि मते तु अत्राप्यनुदात्तः शेषः । द्वितीयस्तु सूत्रान्तरैर्विहितः । व्यचक्षयत्स्वः, ते वर्धन्ते इत्यादि ।

मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे 'मुखनासिकम्' इति स्यादत आह—मुखसहितेति ॥

तुल्यास्य (पा० सू० १।१।९)। आस्ये भवमास्यं, "शरीरावयवाद्यत्। इत्यभिप्रेत्याह—ताल्वादीति। आभ्यन्तरेति। एतच्च प्रशब्दबलाल्लभ्यते।

---

शब्दरत्न

आस्यशब्देन कथं तदवयवताऽऽल्वादिग्रहणमत आह—आस्ये भवमिति। प्रशब्द-बलादिति। प्रकृष्टो यत्नः प्रयत्नः। प्रकर्षश्च वर्णोत्पत्त्यव्यवहित प्राक्कालिकत्वरूप इति

---

तत्त्वाऽऽदर्शः

मुखसहितेति। मुखनासिकेति सूत्रे मुखञ्च नासिकाचेति न विग्रहः, अन्यथा प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यात्। वस्तुतस्तु मुखसहितया नासिकये-त्यपि न विग्रहः, किन्तु मुखद्वितीयया नासिकयेति। अन्यथोत्तरपदलोपस्य नित्यत्वेन मुखसहितनासिकयेति मूलस्यासङ्गत्यापत्तिः। केचित्तु—सूत्रे मुखपदं मुखसहिते लाक्षणिकम्, शाकपार्थिवादौ पाठे च न मानं नापि प्रयोजनमित्याहुः। अन्ये तु-'मुखोपसहिता वा नासिका वचनमस्येति भाष्योक्तेरुपसहितेति विग्रहवाक्यम्, तादृशस्यैव शाकपार्थिवादिगणे पाठकल्पनम्, मुखसहितेत्यस्य तु तदर्थपरिचाय-कत्वमात्रम्। एवञ्च मूलोक्त मुखसहितनासिकयेति व्याख्यानं नासमञ्जसमित्याहुः।

तुल्यास्येति। तुल्यास्य प्रयत्नं सवर्णम्। तुल्यञ्च तुल्यश्च तुल्ये इति। 'नपुंसक-मनपुंसकेनैकवदि'ति क्लीवस्य शेषः प्राप्तः, 'अद्वन्द्व तत्पुरुषे'ति निषेधान्न भवति। आस्यञ्च प्रयत्नश्चास्यप्रयत्नौ तुल्यावास्यप्रयत्नौ यस्य तत्तुल्यास्यप्रयत्नम्। यस्येति जनकत्वं षष्ठ्यर्थः। यज्जनक ताल्वादिस्थानाभ्यन्तर प्रयत्नौ। तुल्यौ नामसदृशौ। सादृश्यस्य च प्रतियोग्यंशे नित्यसाकांक्षत्वेन यज्जनकताल्वादिस्थानप्रयत्नाभ्या-मित्यर्थः। तथाचाकारस्याष्टादशाकारेण सह सवर्णसंज्ञा। ननु सादृश्यस्य भेदघटित-त्वेन दीर्घह्रस्वाकारयोः कण्ठस्थानविवृतप्रयत्नयोरैक्यात्तुल्यत्वव्यवहारः कथमिति चेन्न वैयाकरणमते सादृश्यन्न भेदघटितं किन्तु तद्गतभूयोधर्मवत्त्वमित्येवेत्यदोषात्। नचेकाराकारयोः यत्किञ्चिद्विवृतत्वरूपधर्ममादाय सावर्ण्यापत्तिरितिवाच्यम्। स्थान-प्रयत्नैतदुभयमादायैव सावर्ण्यं भवति। तथा च स्वजनकस्थानप्रयत्नवृत्तिस्थान प्रयत्नत्वव्याप्यधर्मवत्स्थानप्रयत्ननिष्ठजनकतानिरूपितजन्यत्वसम्बन्धेन वर्णविशिष्टो

तत्त्वाऽऽदर्शः

वर्णः सवर्णसंज्ञको भवतीत्यर्थः। तथा च प्रकृते अकारजनककण्ठस्थानविवृतप्रयत्नवृत्तिस्थानप्रयत्नत्वव्याप्यधर्मवत्कण्ठस्थानविवृतप्रयत्ननिष्ठजनकतानिरूपितजन्यत्वसम्बन्धेन वर्णविशिष्टोवर्णः इकारो न भवतीति न तयोः सावर्ण्यम्। नचैवमिकारैकारयोः सावर्ण्यं स्यादिति वाच्यम्। स्वजनकयावत्स्थानप्रयत्नाभ्यां स्वजनकयावत्स्थानप्रयत्नतुल्य.वित्यर्थेनादोषात्। यावत्स्थानप्रयत्नत्वञ्च—स्वजनकस्थानप्रयत्नजन्यत्वे सति स्वाजनकस्थानप्रयत्नाजन्यत्वम्। तथाच प्रकृते इकाराजनककण्ठस्थानाजन्यत्वेनाजन्यत्वं नास्तीत्यदोषः। नचैवमपि एकाराजनकमूर्धास्थानाजन्यत्वमिकारस्यास्तीत्येकारनिरूपितेकारस्य सावर्ण्यापत्तिः, अतः स्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजनकताविशिष्टजनकता निरूपितजन्यतासम्बन्धेन वर्णविशिष्टोवर्णः सवर्णसंज्ञको भवति। जनकता वैशिष्ट्यञ्च स्वव्याप्यत्व, स्वव्यापकत्वैतदुभयसम्बन्धेन। तयाचेकारनिरूपिततालुस्थाननिष्ठजनकताप्रतियोगिकाभाववति कण्ठे एकारनिरूपितजनकतायाः सत्वात् व्याप्यत्वाभावः। एवमेकारनिरूपितजनकताधिकरणकण्ठस्थानवृत्त्यभावप्रतियोगित्वमेव इकारनिरूपिततालुस्थाननिष्ठजनकताया इति व्यापकत्वाभावान्नदोषः। अत्रोच्यते व्याप्यत्वव्यापकत्वयोः सम्बन्धत्वं नास्ति, तथाहि—तद्घटकस्वपदस्य परिचायकत्वेनाभाववद्वृत्तित्वमेव सर्वेषामित्यवृत्तित्वमप्रसिद्धम्। एवं यत्किञ्चिदधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वं चालनीन्यायेन सर्वेषामित्यप्रतियोगित्वमप्रसिद्धम्। अतः स्ववृत्त्यवच्छेदकत्वसम्बन्धावच्छिन्नजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजनकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरुपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतजनकतानिरूपितजन्यतावत्वसम्बन्धेन। तथाचेकारनिरूपितजनकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकन्तालुस्थान विवृतप्रयत्नैतदुभयगतद्वित्वम्, तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूता एकारनिरूपितजनकता न भवति, तस्याः कण्ठतालुविवृतैतत्त्रितयवृत्तित्रित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वादित्यदोषः। अथवा—परस्परत्वाभावान्न सवर्णसंज्ञा। परस्परत्वंच सम्बन्धविशिष्टसम्बन्धसम्बन्धित्वम्। वै० च स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्व, स्वभिन्नत्व, स्वीयानुयोगितासमानाधिकरण प्रतियोगिताकत्व स्ववृत्ति सम्बन्धितावच्छेदकरूपवत्वैतच्चतुष्टयसम्बन्धेन।

तुल्यास्यं किम् । तृप्तं । अत्र पकारस्य तकारे परे "झरो झरि" ( पा० सू० ८।४।६५ ) इति लोपो मा भूत् । प्रयत्नग्रहणं किम् । वाक्श्च्योतति । शस्य लोपो न । ञमङणनानामिति । 'नासिका च' इति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते । "अनुस्वारोत्तमा अनुनासिकाः" इति तैत्तिरीयाणां प्रातिशाख्यम् । "यमानुस्वारनासिक्यानां नासिका, अनुनासिकाश्चोत्तमाः" इति कात्यायनप्रातिशाख्यम् । "वर्गोत्तमा ञमङणना अनुनासिका भवन्ति, चशब्दात्स्वस्थानाद्यपरित्यागेन नासिकास्थानं द्वितीयमेषामित्यर्थः" इति तद्भाष्यं च । "एदैतोः" इत्यादौ तपरत्वमसंदेहार्थं, न तु तत्कालग्रहणार्थम् । तेन प्लुतस्यापि संग्रहः ॥

"पूर्वत्रासिद्धम्" ( पा० सू० ८.२।७ ) ॥ यद्ययं स्वतन्त्रो विधिः स्यात् , तर्हि 'त्रिपादी पूर्वं प्रत्यसिद्धा' इत्येव लभ्येत, त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यादत आह—अधिकारोऽयमिति । यद्यत्र कार्यासिद्धत्वमिष्येत

---

शब्दरत्न

भावः । चकारेणेति । अत्र यथा नासिकायाः स्थानत्वं, तथाऽन्यत्र निरूपितम् । न तु तत्कालेति । एषां शिक्षाद्युक्तार्थानुवादत्वेनात्र शास्त्रप्रवृत्त्यभावादिति भावः ।

नासिद्धं स्यादिति । ततश्च गोधुङ्मानित्यादौ घत्व जश्त्वानुनासिकेषु भष्भावो

---

तत्त्वाऽऽदर्शः

अत्र एकारजनकतालुस्थानजन्यत्वविशिष्टस्वाजनकमूर्धस्थानाऽजन्यत्वमिकारस्यास्ति, तथापि इकारजनकतालुस्थानजन्यत्वविशिष्टस्वाजनककण्ठस्थानाजन्यत्वमेकारे नायाति इति परस्परत्वाभावादेव न सवर्णसंज्ञेति बोध्यम् । सम्बन्धचतुष्टयपदकृत्यं शेखरदीपके स्पष्टम् ।

पूर्वत्रासिद्धमिति । ननु संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ॥

इति सूत्रलक्षणेऽस्य विधित्वमाहोस्विदधिकारत्वम्, यदि विधिसूत्रं स्यात् तर्हि त्रिपादी पूर्वं प्रत्यसिद्धा इत्येवार्थो लभ्येत, त्रैपादिके पूर्वं प्रति परमसिद्धमित्यर्थो न स्यात् ततश्च गोधुङ्मानित्यादौ, गोदुह मानिति स्थिते घत्व जश्त्वयोः प्राप्तयोः

तर्हि पूर्वत्रासिद्धमिति 'मनोरथः' इत्यादावुत्वं न स्यात्। परत्वाद् "रो रि" (पा० सू० ८।३।१४) इत्यस्य प्रसङ्गात्।

तथा च "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति सिद्धान्तो व्याकुप्येत। अमू, अमी, इत्यादि च न सिध्येदत आह—त्रिपादीति। परं

---

शब्दरत्न

न स्यात्। न चातिदेशान्तरवदस्यापि त्रिपाद्यां प्रवृत्तौ न दोषः। सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः। मध्ये पाठस्य विप्रतिषेधसूत्रस्य च सामर्थ्याश्रयणे तु विनिगमनाविरहात्त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति भावः। रोरीत्यस्य प्रसङ्गादित्ति। सिद्धेऽसिद्धत्वारोपात् सूत्रोदाहरणसम्पत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके कार्ये जाते तत्राभावप्रतियोगित्वारोपेऽपि देवदत्तहन्तृहतन्यायेन स्थानिभूतरोरभावाद् "हशि च" [पा० सू० ६।१।११४] इत्यस्याप्राप्तिरिति भावः।

---

तत्त्वाऽऽदर्शः

जश्त्वापवादत्वेनादौ घत्वे ततो जश्त्वानुनासिकयोः प्राप्तयोरन्तरङ्गत्वाज्जश्त्वे ततोऽनुनासिके झषन्तत्वाभावेन 'एकाचो बशो भष्झषन्तस्यस्ध्वोः' इति सूत्रेण भष्भावो न स्यात्। नचानुनासिकत्वं जश्त्वापवाद इति वाच्यम्, सुगण्वानित्यादौ तस्य चारितार्थ्यात्।

नच स्थानिवत्वातिदेशान्तादिवद्भावातिदेशवत् पूर्वत्रासिद्धमित्यस्यापि त्रिपाद्यां प्रवृत्तौ दोषाभाव इति वाच्यम्, सपादसप्ताध्याय्यामपि पूर्वम्प्रति परासिद्धत्वापत्तेः। मध्येपाठस्य विप्रतिषेध सूत्रस्य च सामर्थ्याश्रयणे तु विनिगमना विरहेण त्रिपाद्यामप्यप्रवृत्त्यापत्तिरिति बोध्यम्।

नचास्मिन् सूत्रे वतिनिर्देशाभावात् अतिदेशान्तरवदतिकथनमसङ्गतमिति- वाच्यम् 'विनाऽपि वतिं वत्यर्थो गम्यते' इति भाष्यकारोक्त्या वत्यर्थलाभात्।

वस्तुतस्तु—जश्त्वं प्रति अपवादत्वात् भष्भावो बाधेत, नच तं परत्वा दनुनासिको बाधते, तं चान्तरङ्गत्वाज्जश्त्वं, तं चापवादत्वाद् भष्भावो बाधत इति चक्रकापत्तिरिति वाच्यम्, जश्त्वापेक्षयाऽपवादत्वात् अनुनासिकापेक्षयाऽन्तरङ्गत्वाच्च पूर्वं भष्भावसिद्धेः।

शास्त्रमिति च। एतेन त्रिपाद्यां विहितं कार्यमसिद्धमित्यादिः प्राचां ग्रन्थः परास्तः ॥

---

शब्दरत्न

स्पष्टं चेदं प्रकृतसूत्रे, "अचः परस्मिन्" [पा० सू० १।१।५७] इत्यत्र "षत्वतुकोः" [ पा० सू० ६।१।८६ ] इत्यत्र च भाष्ये।

तथा चेति। शास्त्रस्य तद्बोध्यकार्यस्य च शास्त्रजज्ञानवेलायामसिद्धत्वाभावे "रोरि" [पा० सू० ८।३।१४] इत्यादेः प्रसङ्गे चेत्यर्थः। व्याकुप्येतेति। त्वया विप्रतिषेधशास्त्रप्रवृत्तौ निमित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य, शास्त्रस्यवाऽसिद्धता वक्तुमशक्या, किं तु लक्ष्ये जातस्य तस्य प्रवर्तमानसपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वं वाच्यम्। एवं च विप्रतिषेधाभावोपपादकहेतोरसिद्धिरिति भावः। न च ममापि पूर्वोत्तरपदयोः पूर्वपरशास्त्रजन्यबोधविषयकार्यलक्षणयाशास्त्रेएव कार्यासिद्धत्वमिति वाच्यम्, लक्षणायां मानाभावात्, फलाभावात्, गौरवाच्च।

---

तत्त्वाऽऽदर्शः

नन्वेवं भष्भावसिद्धत्वेन शब्दरत्ने भष्भावो न स्यादिति कथनमयुक्तमितिचेन्न, अपवादान्तरङ्गाभ्यां प्राप्तं बाधित्वा 'झयः' इति सूत्रेण वत्वापत्तिर्दोषः स्यादिति तदाशयात्। नच तडित्वानित्यादौ सूत्रस्य चारितार्थ्यमिति वाच्यम्, तावन्मात्रेण झयः इति प्रत्याहारग्रहणाचारितार्थ्यस्य दुरुपपादत्वात्। नच ततः परत्वाजश्त्वानुनासिकयोः कृतयोर्न वत्वप्राप्तिरितिवाच्यम्, 'विप्रतिषेधेपरम्' इत्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः। पूर्वत्रासिद्धेनास्ति विप्रतिषेधोऽभावादुत्तरस्येत्यनेन तस्या यथोद्देशत्वस्यैव बोधनात्।

अधिकारत्वादेव 'श्चुत्वंधुटिसिद्धंवाच्यम्' इत्यादि वार्तिकंचरितार्थमिति बोध्यम्।

वस्तुतस्तु—श्चुत्वंधुटिसिद्धंवाच्यम् इति वार्तिकेन त्रिपाद्यामेवास्य प्रवृत्तिनियमः। पूर्वत्रासिद्धेनास्तिविप्रतिषेधोऽभावादुत्तरस्येति वार्तिकवचनेन च विप्रतिषेधशास्त्रस्य सपादसप्ताध्याय्यां प्रवृत्तिनियमसिध्याऽधिकारपक्षो नाश्रयणीय इति गुरवः प्राहुः।

कार्यासिद्धत्वमिति। अत्र सूत्रे शास्त्रासिद्धत्व पक्षो युक्त इति प्राञ्चः।

शब्दरत्न

ननु मनोरथे दर्शनाभावरूपे लोपेऽभावारोपस्य दर्शनारोपरूपत्वेन न दोषोऽभावाभावस्य प्रतियोगिरूपत्वादित्यत आह—अमू इत्यादि। अद् अ औ, अद् अ अस्, इत्यवस्थायां जातस्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि पूर्वरीत्याऽकाराभावेन पररूपाद्यनापत्तिः। मुत्वस्यासिद्धत्वनिषधसामर्थ्यादेतद्विषये उक्तन्यायाप्रवृत्तिरिति चेत्? तेन शास्त्रासिद्धत्वमेव ज्ञापयितुं युक्तम्। एवं शोभावात्पूर्वम् "अदसोसेः" [ पा० सू० ८।२।८० ] इति मुत्वे दात्परैकाराभावेन "एत ईत्" [ पा० सू० ८।२।८१ ] इति सूत्रमपि व्यर्थं

---

तत्त्वाऽऽदर्शः

केचित्तु—पूर्वपरपदयोस्तद्विहितकार्ये लक्षणया कार्यासिद्धत्वमाहुस्तन्न, मनोरथ इति लक्ष्ये परत्वात् रोरीति लोपे जाते हशिचेति शास्त्रविहितकार्यदृष्ट्या लोपस्यासिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेन स्थानिनोरोरभावेनोत्वानापत्तेः। नचात्र लोपस्याभावरूपत्वेनाभावाभावस्य प्रतियोगिरूपत्वेन स्थानिनो लाभः स्यादेवेति वाच्यम्, 'अद् अ औ' इत्यत्र परत्वान्मुत्वे पररूपदृष्ट्या मुत्वस्यासिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेनाकाराभावेन पररूपाद्यनापत्तौ अमू इति प्रयोगासिद्धेः। नच प्रथमाकारेण सह त्यदाद्यत्वनिष्पन्नतृतीयाकारस्य पररूपसम्भवात् पररूपाद्यनापत्तिरिति कथनमयुक्तमिति वाच्यम्, एवं सम्भवेऽपि द्वितीयाकारेणसहेष्टतृतीयाकारस्य पररूपासंभवात् इष्टपररूपाद्यनापत्तिरिति तदर्थस्वोकारात्। नचोच्चारणाधिकरणीभूतकालेन व्यवधानात् प्रथमाकारस्य तृतीयाकारेणसह पररूपासंभवात् पूर्वोक्तव्याख्यानंविफलमिति वाच्यम्, 'इमंमेगङ्गेयमुने' इति मन्त्रे 'आमन्त्रितंपूर्वमविद्यमानवत्' इति सूत्रेण सर्वेषामविद्यमानवत्वेऽपि मे शब्दमेवाश्रित्य सर्वेषांनिघात इति कथनेन कालेनव्यवायेऽपि कार्यं भवति इति ज्ञापनात्। अन्यथा 'इमंमेगङ्गेयमुने' इत्यत्राविद्यमानत्वेऽपि तदुच्चारणाधिकरणीभूतकालेनव्यवायात् तत् न स्यादिति बोध्यम्। एतेन मुत्वस्यासिद्धत्वेऽपि तदधिकरणकालस्यासिद्धत्वे प्रमाणाभावेनार्धमात्राधिककालशून्यत्वरूपसंहिताया आद्याकारान्त्याकारयोरभावेन पररूपप्राप्त्यभाव इत्यपास्तम्। नचैवममुनेत्यत्रोक्तरीत्या पररूपाप्रवृत्तौ घेः परस्याङोऽभावेन तस्यनाभावे मुत्वस्यासिद्धत्वाप्रवृत्तौ तदसिध्यर्थं क्रीयमाणेन

शब्दरत्न

सदत्रैव ज्ञापकमस्तु। न च "तौ सत्" [पा०सू० ३।२।२७] इत्यादिनिर्देशैर्देवदत्तहन्तृहतन्यायोऽनित्य इति वाच्यम्। 'हते देवदत्ते तद्धन्तरि हतेऽपि नोन्मज्जनं, हतत्वारोपे तु सुतराम्। हन्तुमुद्यतस्य हनने तून्जीवनमस्त्येव' इति न्यायशरीरम्। 'तौ' इत्यादौ वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रं, न तु हननस्थानीया लक्ष्ये प्रवृत्तिरिति न तत्रास्य न्यायस्य विषय इति तेनास्यानित्यत्वबोधनासम्भवात्। स्पष्टं चेदं "स्वादिष्वसर्व०" [पा०सू०४।१।१७] इत सूत्रे कैयटे। प्रकृते तु निरधिष्ठानारोपासम्भवेन हननसजातीयं प्रयोगे कार्यप्रवर्तनमावश्यकमेवेत्यन्यत्र

---

तत्त्वाऽऽदर्शः

'नमुने' इति सूत्रस्थ नेतियोगविभागेनोक्तन्यायोऽनित्य इति वाच्यम्, लाघवेन शास्त्रासिद्धत्वज्ञापनस्यैव युक्तत्वात्। नच 'तौसत्' इत्यादि निर्देशैर्देवदत्तहन्तृहतन्यायोऽनित्य इति वाच्यम्, अत्र न्यायाविषयत्वेनानित्यत्वज्ञापनासंभवात्। तथाहि 'हतेदेवदत्तेतद्धन्तरिहतेऽपिदेवदत्तस्यनोऽज्जीवनम् हतत्वारोपे तु सुतराम्, हन्तुमुद्यतस्य हनने तु उज्जीवनमस्त्येवेति न्यायशरीरम्', एवञ्च तौ इत्यादौ वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रं नतु हननस्थानीया लक्ष्येप्रवृत्तिरिति न्यायाविषयः। नन्वेव ममू इत्यादौ उत्वस्य प्रसङ्गमात्रमस्तु, तत्प्रसक्तौ पररूपेण बाध इत्येवासिद्धत्वेन कल्प्यत इतिचेन्न, कार्यासिद्धत्ववादिनः निरधिष्ठानारोपासम्भवेनोक्तन्यायविषयस्य सुलभत्वेन पूर्वोक्तदोषापत्त्याऽस्यपक्षस्यायुक्तत्वात्।

वस्तुतस्तु—पूर्वत्रासिद्धमित्यस्य त्रैपादिकं शास्त्रं न प्रवृत्तं तत्कृतास्थानिनिवृत्तिरपि न जातेतिसंभावनायां यद्भवति तद्भवति, यन्नभवति, तन्नभवतीत्यर्थकरणेन कार्यासिद्धत्वस्वीकारेऽपि अमू इत्यादौ मुत्वेजातेऽपि मुत्वंनकृतं तत्कृतास्थानिनिवृत्तिरपि नजातेतिसम्भावनया उकारे एवाकारबुध्या पररूपे जाते सन्नियोगशिष्टन्यायेन मकारस्यापि निवृत्तौ वृद्धौतद्घटकमात्रोद्देश्यकविकाराभावेन तल्लक्ष्यत्वाभावात् पुनर्मुत्वे रूपसिद्धौ कार्यासिद्धत्वपक्षोऽप्युचित एवेतिबोध्यम्। यद्यपि 'अमूभ्याम्' अमीभिरित्यादौ तद्घटकमात्रोद्देश्यकविकारसत्वेन तल्लक्ष्यात्वात्पुनर्मुत्वं नस्यादिति रूपासिद्धितथापि 'नमुने' इति निषेधेन मुत्वे लक्ष्येलक्षणन्यायोनप्रवर्तत इति कल्पनेनादोषइतिबोध्यम्।

विवृण्वते कण्ठमिति। विवार एषां प्रयत्न इति भावः। वर्गयमगा इति। वर्गगा यमगाश्चेत्यर्थः। काद्य इति। लोकप्रसिद्धपाठापेक्षमिदम्। चतुर्दशसूत्र्यां मावसानत्वायोगात्। अर्द्धविसर्गेति। सादृश्यमुच्चारणे लेखने च बोध्यम्। ऋॡवर्णयोरिति। आ च आ च रलौ, तौ च तौ वर्णौ चेति

---

## शब्दरत्न

विस्तरः। परास्त इति। विहितं कार्यमित्यध्याहारे गौरवाच्च। किंच, त्रिपादीशास्त्रं, तद्धि विधाने करणं न त्वधिकरणम्। त्रिपाद्यां विद्यमानेन शास्त्रेण विहितं कार्यमिति व्याख्याने त्वत्यन्तं क्लिष्टतेत्यपि बोद्ध्यम्।

लोकप्रसिद्धेति। "त्रिभिश्च मध्यमैर्वर्गैः" इति भाष्यपर्यालोचनया क–ख–ग–घ ङेत्यादीनामप्यनादित्वमिति भावः। उच्चारणेति। पादमात्रिकाविमाविति भावः। लेखने चेति। अर्द्धवृत्तद्वयात्मकलिपित्वादिति भावः। रलाविति। ऋॡ औ इति स्थिते "ऋत्यकः" (पा० सू० ६।१।१२८) इति प्रकृतिभावेन दीर्घाभावे गुणे यणि च रलावित्यस्य सिद्धिः। उश्च उल् च ऋलोरिति पाठः। रलोरिति पाठे आगन्तुनाऽका-

---

## तत्त्वाऽऽदर्शः

ऋॡवर्णयोरिति—अत्र आच आच रलौ, रलौ च तौ वर्णौ च ऋॡवर्णौ, तयोः ऋॡवर्णयोरितिविग्रहः, यद्वा—उश्च उल् च ऋलोः, तयोर्वर्णयोरितिविग्रहः। प्रथमान्तेन, परिनिष्ठित विभक्त्या वा विग्रह इति सिद्धान्तात्। मानञ्च, प्रथमकल्पे 'अनेकमन्यपदार्थे' इति सूत्रस्थभाष्यम्। द्वितीयकल्पे च 'एकविभक्तिचापूर्वनिपाते' इति सूत्रस्थ एकविभक्तिग्रहणम्, तद्धि 'एकस्यानियतविभक्तित्वे उपसर्जनसंज्ञावारणाय, यदि च प्रथमान्तानामेवसमासः तदा 'अतिमाल' इत्यादौ 'मालामतिक्रान्त इति विग्रहेऽतिपदस्यापिनियतविभक्त्यन्तत्वेन एकविभक्तीत्यस्य व्यावर्त्याभावः, परिनिष्ठितविभक्त्याऽपि समासो भवति, इति राद्धान्तादरे तु अतिक्रान्तम्, अतिक्रान्तेनेत्यादिक्रमेण तस्यानियतविभक्तिकत्वमिति तत्सार्थकम्, अतएव च 'तत्पुरुषेतुल्यार्थ' इति सूत्रे भाष्ये 'परमेकारके' परमेणकारकेण' इत्यादौ पूर्वपदस्वरप्राप्तिरूपातिप्रसङ्गमाशङ्क्य 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवग्रहण'मिति परिभाषया समाहितमिति बोध्यम्।

विग्रहः उश्च उल् च ऋलोः। तयोर्वर्णयोरिति वा। प्रथमान्तेन परिनिष्ठित-विभक्त्या वा विग्रह इति सिद्धान्तात्। "ऋत्यकः" (पा० सू० ६।१।१२८) इति प्रकृतिभावः।

"नाज्झलौ (पा० सू० १।१।१०)॥ आकारसहित इति। अत्र च "कालसमयवेलासु" (पा० सू० ३।३।१६७) इत्यादिनिर्देशाः प्रश्लेषे

---

शब्दरत्न

रेण निर्देश इति बोद्धयम्। तयोर्वर्णयोरिति। "पूरणगुण"(पा०सू०२।२।११)इति निषेधस्तु षष्ठीसमासस्य न तु कर्मधारयस्य, बहुलग्रहणेन तदभावो भाष्योदाहृतविषय एव नान्यत्रेति भावः। प्रथमान्तेनेति। प्रथमोपस्थितत्वादिति भावः। अयं पक्षः "अनेकमन्यपदार्थे"(पा०सू०२।२।२४) इति सूत्रे भाष्ये। परिनिष्ठितेति। अत्र च "एकविभक्ति चापूर्वनिपाते" (पा० सू० १।२।४४) इति ज्ञापकम्। अन्यथा मालामतिक्रान्त इति विग्रहेऽतिपदस्यापि नियतविभक्त्यन्तत्वेनैकविभक्तीत्यस्य व्यावर्त्यालाभः। एकस्यानियतविभक्तित्वे हि तद्वारणाय "एकविभक्ति" इति सार्थकम्। परिनिष्ठितविभक्त्या समासे त्वतिक्रान्तमतिक्रान्तेनेत्यादिक्रमेण तस्यानियतविभक्तिकत्वं स्पष्टमेव। अत एव "तत्पुरुषे तुल्यार्थ" (पा०सू० ६।२।२) इति सूत्रे भाष्ये परमे कारके परमेण कारकेणेत्यादावतिप्रसङ्गमाशङ्क्य प्रतिपदोक्तपरिभाषया समाहितमिति भावः।

---

तत्त्वाऽऽदर्शः

ननु आच आच ऋलौ, इति विग्रहपूर्वकल्पे ऋलृ औ इति स्थिते 'ऋत्यकः' इति प्रकृतिभावप्रवृत्तिपक्षे ऋ अलौ इति स्यात् कथं ऋलावितिचेन्न, ऋ लृ औ इति स्थिते अकःसवर्णेदीर्घः इति सूत्रेण प्राप्तदीर्घस्य ऋत्यकः इति सूत्रेण प्रकृतिभावात्तदभावे गुणे यणि च ऋलावित्यस्य सिद्धेः। नच विग्रहद्वितीयकल्पे 'पूरणगुणेति' सूत्रेण समासनिषेधापत्तिरिति वाच्यम्, षष्ठीसमासस्यैव तन्निषेधात्। यद्यपि अन्यत्र कर्मधारयसमासेऽपि निषेधोदृष्टस्तथापि 'बहुलग्रहणेन' 'यजुषः पीयमानस्वे'त्यादि भाष्योदाहृतविषये एव निषेधो नान्यत्रेति बोध्यम्।

नाज्झलाविति। अत्र निषेधक शास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन निषेध्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचोभवतीति नियमेन निषेधक-

लिङ्गम्। न चैवमपि यियाऽ३सो, इत्यादौ "गुरोरनृत" (पा० सू० ८।२।८६) इति प्लुतादाकारात्परस्य सनः सस्य षत्वं स्यादेवेति वाच्यम्। आ३, आ३ इति द्वन्द्वे सवर्णदीर्घेण दीर्घात्परत्र प्लुतोऽपि प्रश्लिष्यत इति व्याख्यानात्। यणादिकमिति। शीतलशब्दे सवर्णदीर्घ आदिशब्दार्थः।

---

## शब्दरत्न

व्याख्यानादिति। एवं व्याख्याने मानं तु प्रयत्नभेदेन "नाज्झलौ" इत्येतत्प्रत्याख्यानपरं भाष्यम्। तद् ध्वनयन्वक्ष्यति--सूत्रेमास्त्विति भाष्ये स्थितमिति। शीतलशब्दे इति। शस्य ईकारे परे दधीतीकारस्य शकारे परे चेत्यर्थः। न च शीङः शकारोच्चारणेन तच्छकारस्येकारे न दीर्घ इति वाच्यम्, शीतलशब्दे शीङोऽभावात्। किं तु श्याधातोः क्ते "द्रवमूर्तिस्पर्शयोः श्यः" (पा०सू०६।१।२४) इत्यनेन सम्प्रसारणे "श्योऽस्पर्शे" (पा० सू० ८।२।४७) इत्युक्तेर्नत्वाभावे च निष्पन्नाच्छीत शब्दात्सिध्मादित्वाल्लचि शीतलशब्दइत्यदोषात्। शीतशब्दो हि सिध्मादिषु गणरत्ने वृत्तौ च पठ्यते। किंच तेनापूर्ववचनकल्पनापेक्षया सूत्रोदाहरणत्वमेव तस्य युक्तमिति भावः।

---

## तत्त्वाऽऽदर्शः

शास्त्रीयोद्देश्यतावच्छेदकाच्त्वहल्त्वातिरिक्तत्वेन संकोचःकर्तुमशक्य इति कथमेकवाक्यतेतिचेदत्रोच्यते, नाज्झलावितिसूत्रं तुल्यास्यसूत्रावृत्तौ तात्पर्यग्राहकम्, तथाचाज्जनकावास्यप्रयत्नौ अज्जनकाभ्यामास्यप्रयत्नाभ्यान्तुल्यौ तौ मिथः सवर्णसंज्ञकौ भवतः, एवम् हल्जनकावास्यप्रयत्नौ हल्जनकाभ्यामास्यप्रयत्नाभ्यान्तुल्यौ तौ मिथः सवर्णसंज्ञकौ भवतइत्येकवाक्यता। द्वितीयवाक्यार्थे परस्परवैशिष्ट्यं स्वीयाज्निष्ठानुयोगितासमानाधिकरणप्रतियोगिताकत्व, स्वीयाज्निष्ठप्रतियोगितासमानाधिकरणानुयोगिताकत्वैतदुभयवत्व, स्वीयहल्निष्ठप्रतियोगितासमानाधिकरणानुयोगिताकत्व, स्वीयहल्निष्ठानुयोगितासमानाधिकरणप्रतियोगिताकत्वैतदुभयवत्वैतदन्यतरवत्व, स्वभिन्नत्व, स्ववृत्तिसंसर्गतावच्छेदकधर्मवत्वैतत्त्रितयसम्बन्धेनेति बोध्यम्।

अत्रेति। अत्रैवेत्यर्थः। यद्यपीति। ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः।८

---

शब्दरत्न

अत्रैवेति। ग्राहकसूत्र एवेत्यर्थः अत्र च 'उऋत्'(पा०सू०७।४।७)इति सूत्रे तपरत्वं मानम्। तद्धि चुरादिण्यन्तात्कृतधातोर्लुङ्यचीकृतदित्यत्र दीर्घऋकारस्य स्थाने ह्रस्व एव यथा स्यादित्यर्थम्। पूर्वेणात्राण्ग्रहणे तूद्देश्येन विधेयेन च ऋकारेणानण्त्वाद्भिन्नकालाग्रहणेन न तस्य स्थानित्वं न वा आदेशत्वं प्रसक्तमिति व्यर्थं तत्स्यात्। न च तपरसूत्रेण लृकारग्रहणार्थं तत्। स्थानेऽन्तरतमपरिभाषया ऋकारस्थाने तस्य वारणेन तद्ग्रहणे फलाभावात्। न चैवं ज्ञापितेऽपि भाव्यमानत्वात्सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम्। तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थतयाऽपूर्वबोध्यत्वाभावेनाविधेयत्वात्। कृते तु तपरत्वं भाव्यमानताऽपीत्यन्यदेतत्।

---

तत्त्वाऽऽदर्शः

अत्रैवेति। ननु अण् प्रत्याहारस्य पूर्वेण परणकारेणवोपपत्तिसम्भवात् प्रकृतसूत्रे पूर्वेण परेण वा ग्रहणमिति संशय इतिचेन्न, अत्र परणकारेणैव ग्रहणात्। मानञ्चात्र 'उऋत्' इति सूत्रस्थ तपरकरणम्, तथाहि चुरादिण्यन्तात्कृतसंशब्दनेधातोर्लुङि 'अचीकृत'दित्यत्र दीर्घऋकारस्य स्थाने ह्रस्वऋकार एव स्यादित्येतदर्थम् तत्र तपरकरणम्, यदिचात्र पूर्वणकारेणाण्ग्रहणम् तदोद्देश्येन विधेयेनच ऋकारस्यानण्त्वेन भिन्नकालस्याग्रहणात् न तस्य स्थानित्वं नवाऽऽदेशत्वम्प्रसक्तमिति व्यर्थन्तत्स्यात्। पूर्वोक्तार्थे ज्ञापिते तु ऋकारस्याण्त्वात् ग्राहकशास्त्रेण सवर्णत्वबोधनात् दीर्घादेशापत्तिरिति तद्व्यावृत्त्यर्थं तपरकरणं स्वांशेचारितार्थमिति बोध्यम्।

नचैवं ज्ञापितेऽपि भाव्यमानोऽण्सवर्णान्नगृह्णाति इति परिभाषया सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यं स्वांशे चारितार्थ्यस्य दुर्निरूपत्वादिति वाच्यम्, उऋत् इति सूत्रे तपरत्वाभावे उद्देश्यविधेयत्वाभ्यां दीर्घस्यापिग्रहणे आन्तरतम्यात् ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घ इति स्वरूपव्यवस्थापनादपूर्वबोध्यत्वाभावेनाविधेयत्वादुक्तपरिभाषाऽप्रवृत्तेः।

कृते तु तपरत्वे दीर्घस्यापि स्थाने ह्रस्वविधानादपूर्वबोध्यत्वेनोक्तपरिभाषप्रवृत्तिरिति अन्यत्। नच तपरसूत्रेण लृकारग्रहणार्थन्तदिति ज्ञापकासम्भवः, अन्तरतमपरिभाषया ऋकारस्थाने तद्वारणेन तद्ग्रहणे फलाभावादिति दिक्।

"हो ढः" ( पा० सू० ८।२।३१ ) इत्युपलक्षणं, रमास्वित्यत्र षत्वं, वागाशीरित्यत्र "झयो हः" ( पा० सू० ८।४।६२ ) इत्याकारस्य धकारः, दासीष्टेत्यादौ "दादेः" ( पा० सू० ८।२।३२ ) इति घत्वं च नेति बोध्यम् । यदि तु विवृतमूष्मणामित्यत्र ईषदित्यनुवर्त्य स्वराणां चेत्यत्र निवर्त्य प्रयत्नभेदो व्याख्यायते तदा "नाज्झलौ" इति सूत्रं माऽस्त्विति भाष्ये स्थितम् ॥

"वृद्धिरादैच्" ( पा० सू० १।१।१ ) ॥ ऐजिह द्विमात्र एव तात्परत्वात् , तेन कृष्णैकत्वमित्यत्र त्रिमात्रो न । एवमुत्तरसूत्रेऽपि । तेन गङ्गोदकमित्यादौ त्रिमात्रो न ॥

"भूवादयो धातवः" ( पा० सू० १।३।१ ) ॥ भूश्च वाश्चेति द्वन्द्वः । आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । भूवौ आदी येषामिति

शब्दरत्न

अनिष्पत्तेरिति । 'वर्णनामुपदेशस्तावत्तदुत्तरकालमित्सञ्ज्ञा तदुत्तरम् "आदिरन्त्येन" [ पा० सू० १।१।७१ ] इति प्रत्याहारास्तदुत्तरकाला सवर्णसंज्ञा तदुत्तरकालं "अणुदित्" [ पा० सू० १।१।६९ ] इति, एतेन समुदितेनान्यत्र सवर्णानां ग्रहणम्' इतिवाक्यापरिसमाप्तिन्यायादित्यर्थः ।

अयं भावः—"आदिरन्त्येन" इति प्रत्याहारसिद्धौ "नाज्झलौ" ( पा० सू० १।१।१० ) इत्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णपदबोध्यत्वनिश्चये "अणुदित्" इत्यनेन तावतां ग्रहणं बोधनीयम् । अन्यथा बाधकसम्भावनया तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेनतच्छास्त्रज बोधानापत्तिः । नचैतद्वाक्यार्थबोधात्प्राक् तन्निश्चय इति । यत्तु निषेधवाक्यार्थबोधात्पूर्वं विधेर्वाक्यार्थबोध एव नेति तन्न, पदार्थोपस्थितौ वाक्यार्थबोधे बाधकाभावात् । निषेधस्य प्रतियोगिज्ञानोपपादकतया विध्यपेक्षत्वेऽपि विधेस्तदपेक्षत्वे मानाभावाच्च । रमास्वित्यत्रषत्वमिति । सर्वस्याप्येकयायुक्त्या वारणेनापाद्यमानेऽर्थेन्यायानादरादेवमुक्तम् ॥ भाष्ये स्थितमिति । अनेनाकारप्रश्लेषे मानं दर्शितम् ।

तत्त्वाऽऽदर्शः

भूवादय इति—अत्र भूश्च वाश्च भूवौ, आदिश्च आदिश्च आदी, भूवौ आदी येषान्ते भूवादयः । एको हि आदिशब्दः व्यवस्थावाची, अपरः प्रकारवाची, तथाच भूप्रभृतयो वासदृशाः ये, ते धातुसंज्ञका भवन्तीति सूत्रार्थः सम्पन्नः ।

बहुव्रीहिः। भूप्रभृतयो वासदृशाः। सादृश्यंच क्रियावाचत्वेनेत्यभि-प्रेत्याह—क्रियावाचिन इति। क्रियावाचिनः किम्? "याः पश्यसि" इत्यादौ धातुत्वं मा भूत्। सति हि तस्मिन्, "आतो धातोः" (पा० सू०

शब्दरत्न

सादृश्यं चेति। वाधातौ वासादृश्यं च प्रयोगभेदेन बोध्यम्। आतो धातोरिति। न च स्त्र्यर्थनिमित्तकटापो बहिरङ्गासिद्धत्वम्। "नाजानन्तर्ये" (परि०) इति निषेधात्। ततोऽपि बहिर्भूतसंख्यानिमित्तकविभक्तिनिमित्तकभसञ्ज्ञानिमित्तकत्वेन लोपस्य बहिरङ्गत्वाच्च, अर्थनिमित्तकबहिरङ्गत्वस्याभावाच्च। नाप्ययं लाक्षणिकः।

नकारजावनुस्वारपञ्चमौ झलि धातुषु।

सकारजः शकारश्चेर्षाड्टवर्गस्तवर्गजः॥ १॥

इत्यभियुक्तोक्तेर्भ्रर्ज़ादिषु लाक्षणिकानामपि दर्शनेन तद्विषये तत्परिभाषाया अप्रवृत्तेः। "आतो धातोः" (पा० सू० ६।४।१४०) इत्यत्र प्रतिपदोक्त आकारो गृह्यत इति तु वक्तुमप्यशक्यम्। पशुष इत्यसिद्ध्यापत्तेः। पशुंसनोतीति विट्, "विड्वनोः" (पा० सू० ६।४।४१) इत्यात्वम्। "आतोऽनापः" इति वार्त्तिकमते तु विकल्पार्थक निपात वा शब्दस्य धातुत्वे प्रातिपदिकत्वात्सुब्भावेपदत्वानापत्तिर्दोषः। क्रियात्वं साध्यत्वेन प्रतीयमानत्वम्। साध्यत्वं चोत्पाद्यमानत्वमेवेत्यन्यत्र विस्तरः। हिरुगित्यादि। एषां क्रियासमानाधिकरणत्वाल्लिङ्गाद्यनन्वयित्वाच्च तदर्थस्य क्रियात्वमित्यभि-

तत्त्वाऽऽदर्शः

नन्वत्र एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्ने एकधर्मावच्छिन्नसंसर्गेणान्वयबोधेच्छारूपसहविवक्षाभावात् द्वन्द्वो दुर्लभ इतिचेन्न 'आद्यन्तौटकिता' वित्यत्र आद्यन्तसमुदायस्य टित्कित्समुदायेऽन्वयं कृत्वा पश्चात् यथासंख्यसूत्र सामर्थ्येन टित् इत्यस्य आदौ अन्वयः, कित् इत्यस्य अन्तेऽन्वयस्तथैव प्रकृतेऽपि भूवादय इति विशिष्टस्य तन्त्रेण निर्दिष्टत्वात् भूवोरुभयोरपि उभयविध आदिशब्दे आदावन्वयस्वीकारेणादोषात्। सादृश्यंचात्र क्रियावाचकत्वेन ग्राह्यम्, प्रकृते भूसाहचर्यात् वाशब्दोऽनव्ययमेव गृह्यते, वा सहचर्यात् भूशब्दोऽसत्ववाची गृह्यते, इति परस्परसाहचर्यात् क्रियावाचकस्यैव वा शब्दस्य ग्रहणात्। यदि एकाच्त्वेन सादृश्यं गृह्यते तदा 'ऊर्णु, जागृ' इत्यादेःधातुसंज्ञा न स्यात्। एतेन हल्त्वेन सादृश्यं ग्राह्यमिति परास्तम्। अतएव च न वात्वेन सादृश्यम्।

तत्त्वाऽऽदर्शः

ननु तद्भिन्नत्वेसति तद्गतभूयोधर्मवत्वरूपसादृश्यस्य वा धातावभावात् तत्र धातुसंज्ञा न स्यादितिचेन्न प्रयोगभेदेन वाधातौ वासादृश्यस्य सत्वात्। अतएव च 'नेर्गदेति' सूत्रस्थ 'याति' वाति इतिनिर्देशः सङ्गच्छते। तथाच क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युरित्यर्थः सम्पन्नः।

क्रियावाचिनः किमिति। नन्वत्र क्रियावाचिग्रहणव्यर्थमितिचेन्न याः पश्यसी-त्यादौ धातुसंज्ञायां 'आतोधातो' रिति सूत्रेणाकारलोपापत्तेः। नच 'असिद्धम्बहिरङ्ग-मन्तरङ्गे' इति परिभाषया स्त्र्यर्थनिमित्तकटापोबहिरङ्गासिद्धत्वेनादोष इति वाच्यम् 'नाजानन्तर्येबहिष्ट्वप्रक्लृप्तिः' इति परिभाषया तन्निषेधात्।

नच यत्राचः पञ्चम्यन्तशब्दबोध्यस्यान्यनिरूपितानन्तर्याश्रयणन्तत्रैवैतत्परिभाषा-प्रवृत्त्या प्रकृते दोषतादवस्थ्यम्, 'आतोधातो'रिति सूत्रविहितलोपस्यैव बहिर्भूत-संख्यानिमित्तकविभक्तिनिमित्तकभसंज्ञानिमित्तकत्वेन बहिरङ्गत्वात्। 'त्र्यादेशेस्वन्तस्य-प्रतिषेध' इति वार्तिकारम्भसामर्थ्यात् अर्थनिमित्तकबहिरङ्गत्वस्यैवाभावाच्च। अतएव च 'गौधेरः' 'पचेरन्, इत्यादिसिद्धिः। स्पष्टञ्चेदम्परिभाषेन्दुशेखरे। मानञ्चात्र 'नलोपःसुप्स्वरेति' सूत्रस्थकृतितुग्ग्रहणम्, अन्यथा—वृत्रहभ्यामित्यादौ पदसंज्ञा-सापेक्षनलोपस्य बहिरङ्गत्वादेव तुगभावस्यसिद्धौ तद्वैयर्थ्यमिति बोध्यम्।

नन्वत्र 'लक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्यैवग्रहणमिति परिभाषया 'याःपश्यसी' त्यादौ न दोष इतिचेन्न,

नकारजावनुस्वार पञ्चमौ झलि धातुषु ॥
सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः ॥ १ ॥

इत्यभियुक्तोक्तेर्भ्वादिषु लाक्षणिकानामपिदर्शनेन प्रकृते तत्परिभाषाया अप्रवृत्तेः।

नच 'आतोधातो' रिति सूत्रे प्रतिपदोक्तआकारो गृह्यते, इति याःपश्यसीत्यादौ लाक्षणिकात्वादाकारस्य न दोष इति वाच्यम्, पशुंसनोतीतिविग्रहे, विट्प्रत्यये 'विड्वनोरनुनासिकस्याऽत्' इति सूत्रेण सनोनकारस्यात्वे कृदन्तत्वात् प्रातिपदिक-संज्ञायां शस्विभक्तौ भसंज्ञायां पशुषा असित्यवस्थायां लाक्षणिकत्वादाकारस्य लोपाभावे 'पशुषः' इति रूपासिद्धेः। नच 'क्त्वः' 'ध्नः' इत्यादि रूपसिध्यर्थं 'आतोऽनाप' इति वार्तिककृतोक्तम्, इति याःपश्यसीत्यादावाबन्तत्वेनादोष इति वाच्यम्,

६।४।१४० ) इति स्यात्। भ्वादयः किम्? हिरुक्पृथगित्याद्यव्ययानां, शिश्ये इति भावार्थतिङन्तस्य च मा भूत्। स्तम्भ्वादीनामुदित्करणेन सौत्राणां

शब्दरत्न

मानः। एषामव्ययेषु पाठस्तु अप्रातिपदिकत्वेऽप्यकजर्थः स्यात्। एतेन तेषु पाठसामर्थ्याद्धातुत्वाभाव इत्यपास्तम्। नन्वेषां क्रियाकाङ्क्षादर्शनेन न क्रियावाचकत्वमत आह—शिश्ये इति। कालोऽपि धात्वर्थ एवेति न क्रियावाचकत्वहानिः, तस्य च धातुत्वे "आदेच उपदेश" ( पा० सू० ६।१।४५ ) इत्यात्वं स्यात्। तद्धि अनैमित्तिकं धातुत्वनिमित्तकं चेति स्पष्टमेव। अत्र च प्रत्ययस्यैव धातुत्वापत्तिर्बोध्या, तिङन्तस्य तूपदेशाभावान्नात्वप्रसक्तिरित्याहुः। ननु षष्ठे प्रकृतसूत्रे धातुग्रहणासम्बन्ध उक्तो भाष्ये इति न तद् धातुत्वनिमित्तकम्, किं चाशितीति प्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधानान्नात्रात्वप्रसक्तिः। अपि च वासादृश्यमन्यानभिहितक्रियावाचकत्वेनेति न दोषोऽत आह—चेति। सूत्रशेष भाष्योक्तेष्त्राणयति, वक्ष्यतीत्यादिषु

तत्त्वाऽऽदर्शः

विकल्पार्थकनिपातवाशब्दस्य धातुत्वे प्रातिपदिकत्वाभावात् सुबभावे 'सुप्तिङन्तमि' त्यस्याप्रवृत्त्या पदत्वानापत्त्या 'देवदत्तः पचति वा'गच्छतिवेत्यत्र निघातापत्तेः 'नृपतिस्तत्रत्वामावाप्रेषयिष्यति' इत्यादौ 'त्वामौद्वितीयायाः' इत्यस्यप्रवृत्त्यनापत्तेश्च। क्रियात्वञ्च—साध्यत्वेनप्रतीयमानत्वम्। साध्यत्वञ्च—कालान्वयितावच्छेदकरूपवत्त्वम्।

मू० भ्वादयः किमिति। नन्वत्र भ्वादिग्रहणम्व्यर्थमितिचेन्न, 'हिरुक्' पृथगित्याद्यव्ययानां धातुत्वापत्तेः। नच पूर्वोक्तक्रियात्वाभावादेव न धातुत्वमिति वाच्यम्, एषां क्रियासमानाधिकरणत्वात् लिङ्गाद्यनन्वयित्वाच्च तदर्थस्य क्रियात्वरूपत्वात्।

नच अव्ययेषु पाठसामर्थ्यात् धातुत्वाभाव इति वाच्यम्, तत्पाठस्याकजर्थत्वात्।

नचैषां क्रियाकांक्षादर्शनेन क्रियावाचकत्वाभावात् न धातुत्वमिति वाच्यम्, 'शिश्ये' इति लक्ष्ये भावार्थकतिङ्प्रत्ययस्य धातुत्वे 'आदेचउपदेशेऽशिति' इति सूत्रेणात्वापत्तेः।

धातुत्वं ज्ञाप्यते । चुलुम्पादीनां तु "बहुलमेतन्निदर्शनम्" इति गणसूत्रेण सङ्ग्रहः ।

"चादयः" ( पा० सू० १।४।५७ ) ॥ अद्रव्यार्थाः किम् ? पशुः । लिङ्गसंख्यान्वितं द्रव्यम् ! इह तु स्यादेव लोधं नयन्ति पशु मन्यमानाः । पशु इति सम्यगर्थे ॥

---

शब्दरत्न

च धातुत्वे शास्त्रविषयता साधुत्वापत्तिरितितद्वयावृत्तये तदिति भावः । उदित्करणेनेति । इदमुपलक्षणम् । तत्प्रकृतिकच्ल्यनुवादेनाङ्विधानेन सार्वधातुके परे विकरणविधानेन च धातुत्वम् । "जुचङ्क्रम्य" ( पा० सू० ३।२।१५० ) इत्यत्र पठितजोः, "जपभज" ( पा० सू० ७।४।८६ ) इत्यत्र पठितपसः, ऋतिप्रभृतीनां च केषाञ्चिद्धात्वधिकारविहितकार्योद्देश्यत्वात् बोध्यम् । एतैश्च स्थितस्य तेषां पाठस्य भ्रंशोऽनुमीयते इति भावः । मैत्रेयाद्यन्यसंमतं समाधिमाह—बहुलमिति ।

---

तत्त्वाऽऽदर्शः

नच सूत्रेऽशितीति प्रसज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधानात्प्रकृतेश्शित्परत्वयोग्यत्वाभावान्नदोष इतिवाच्यम्, एकारस्य धातुत्वे ततोऽपि प्रत्ययोत्पत्तिसम्भावनया शित्परत्वयोग्यत्वसत्वात् । नच वासाद्दश्यमन्यानभिहितक्रियावाचकत्वमिति न दोषः प्रकृत इति वाच्यम्, भाष्योक्तेष्वाज्ञापयतीत्यर्थक 'आणयति' वर्धयतीत्यर्थक 'वड्टयती'-त्यादिषु धातुत्वेशास्त्रविषयतयासाधुत्वापत्तेः, गणसूत्राणां बहूनां साधुत्वविधायकत्वे गौरवात् धातुसंज्ञाविधायकस्यैवावृत्त्या लाघवात्साधुत्वविधायकत्वौचित्यात् । नच सूत्रे भ्वादिग्रहणे कृते सौत्राणां स्तम्भ्वादीनां धातुत्वं न स्यादिति वाच्यम्, एषामुदित्करणेन सौत्राणां धातुत्वज्ञापनात् ।

नचैषां धातुत्वाभावे प्रातिपदिकसंज्ञायां सर्वनामस्थानेप्रत्यये 'उगिदचांसर्वनामस्थानेऽधातोः' इति सूत्रेण नुम्सम्पादकत्वेनोगित्करणस्य चारितार्थ्येन ज्ञापकासम्भव इति वाच्यम्, 'जृस्तम्भु' इत्यादिसूत्रेण च्ल्यनुवादेनाङ्विधानात् सौत्राणां धातुत्वसिद्धेः । अयंभावः, यावदेषां धातुत्वं न स्यात् तावल्लकारासंभवेन 'च्लिलुङि' इति सूत्रस्याप्राप्त्या च्लेरभावेन स्तम्भ्वादिभ्यश्च्लेरङ्विधानं कथं सार्थकं स्यादिति बोध्यम् ।

"उपसर्गाः" ( पा० सू० १।४।५९ ) ॥ निस् दुस् इति सान्तौ ॥ "निसस्तपतौ" ( ८।३।१०२ ) इति निर्देशात्। अयोगवाहानामविशेषेणेति प्रकरणे निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य सकारस्य यो विसर्जनीयः" इति भाष्यकारोक्तेश्च। "उपसर्गस्यायतौ" ( पा० सू० ८।२।१९ ) इति सूत्रे वामनोऽप्येवम्। "निरः कुषः" ( पा० सू० ७।२।४६ ) "सुदुरोरधिकरणे" इति निर्देशाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः ॥

इति संज्ञाप्रकरणम् ॥

---

शब्दरत्न

सम्यगर्थे इति। नं च लुब्धमृषिं नयन्ति पशुं मन्यमानाः" इति निरुक्ते पशुमिति सानुस्वारपाठात् तत्र पदिवति लुप्तविभक्तिकं सत्त्ववाचीति वाच्यम्, लोधमित्यनवगतमिति तद्भाष्योक्त्या तन्मात्रनिर्णायके निरुक्ते पशुशब्दांशेऽन्यथापाठे मानाभावात्। स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे दृशधातौ माधवग्रन्थे चेति दिक्।

वामनोऽप्येवमिति। तत्र हि दुस् सान्त इति तेनोक्तम्।

संज्ञाप्रकरणं समाप्तम्।

---

तत्त्वाऽऽदर्शः

नच ञ्न्यनुवादेनाङ्विधानात्भवतुस्तम्भेर्धातुत्वं इतिकथमन्येषां सौत्राणां धातुत्वमिति वाच्यम्, 'स्तम्भुस्तुन्भुस्कम्भुस्कुन्भुस्कुञ्भ्यःश्नुश्चेति' सूत्रेण सार्वधातुकेपरे श्नाप्रत्ययस्य श्नुप्रत्ययस्यच विधानेन तेषां धातुत्वसिद्धेः। अन्येषाञ्च सौत्राणां धात्वधिकारविहितकार्योद्देश्यत्वेन धातुत्वं बोध्यमिति दिक् ॥

इति मनोरमाशब्दरत्न तत्त्वाऽऽदर्शे संज्ञाप्रकरणम् समाप्तम्।

---

# अथ परिभाषाप्रकरणम्

"इको गुणवृद्धी" [ पा० सू० १।१।३ ]।। गुणवृद्धीशब्दाभ्यामिति। एतच्च पूर्वसूत्राभ्यां गुणवृद्धीपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते। तेनेह न। "दिव औत्" ( पा० सू० ७।१।८४ ) द्यौः। "त्यदादीनामः" ( पा० सू० ७।२।१०२ ) सः, इमम्। षष्ठ्यन्तमिति। सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्दस्वरूपपरतया नपुंसकात्सोर्लुगिति भावः।

---

शब्दरत्न

योजनयेति। यद्यपि तदनुवृत्त्यैव सिद्धे सामार्थ्याच्छब्दव्यापाराश्रयणेन लभ्यते मूलोक्तार्थस्तथाऽपि मन्दबुद्धिसाधारण्येन स्फुटत्वायैवमेवोक्तम्। स इति। अत्र नैव स्यादिति भावः। इममिति। अत्रेकारस्यैवस्यान्त्यत्वन्त्यस्येति भावः। सोर्लुगिति। अत

---

तत्त्वाऽऽदर्शः

इको गुणवृद्धीति। गुणवृद्धीशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठत इति सूत्रार्थः। इदं परिभाषासूत्रम्। तत्वञ्च—अप्रामाण्यज्ञानानास्कन्दितसाधुत्वप्रकारकबोधोपयोगिबोधजनकत्वम्। ननु सूत्रे एकमेव गुणवृद्धिपदं श्रूयते सूत्रार्थे कथं द्विधाश्रवणमितिचेदत्रोच्यते, केचन—पूर्वसूत्रात् अर्थात् "वृद्धिरादैच्" अदेङ्गुण इति सूत्रात् गुणवृद्धिपदे अनुवर्त्य योजनयोक्तार्थलाभइति वदन्ति, तन्नविचारसहम्, प्रकृतसूत्रस्थ "गुणवृद्धिग्रहणसामर्थ्यादुक्तार्थलाभ" इति भाष्याक्षरविरुद्धत्वात्। एवञ्च पूर्वसूत्रादनुवृत्त्यैवसिद्धे पुनः सूत्रे ग्रहणसामर्थ्यादुक्तसूत्रार्थलाभ इतिबोध्यम्। नच पूर्वसूत्रे गुणवृद्धिपदे स्वरूपपरे इति प्रकृते तयोः कथं संज्ञिपरत्वंस्यादिति वाच्यम्, ष्णान्ताषडिति सूत्रे संख्यापदवत्प्रकृतेऽपि संज्ञिपरत्वसंभवात्। सूत्रस्योक्तार्थस्वीकारात् 'दिवऔत्'। इतिसूत्रेऽस्याप्रवृत्तेः 'द्यौः' इतीष्टरूपसिद्धिः, अतएव च 'सः' इमम् इत्यादीनामपि सिद्धिः। अन्यथा स इत्यत्र इकोऽसंभवात् अत्वंनैव स्यात्। इममित्यत्रेकारस्यैवस्यान्त्विष्टस्यान्त्यस्यस्यात्। 'गुणवृद्धिपदमस्याः परिभाषायाः लिङ्गम्। यथा—मिदेर्गुणः, मृजेर्वृद्धिः, अत्र इक इतिपदमुपतिष्ठते। सम्भवतिसामानाधिकरण्येवैयधिकरण्येननान्वयः, इतिनियमात्, मिदेर्गुणः, मृजेर्वृद्धिरित्यादौ

पदमिति । तच्च सम्भवति समानाधिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण सम्बध्यते । "मिदेर्गुणः" (पा०सू० ७।३।८२) "मृजेर्वृद्धिः" (पा०सू० ७।२।११४) इत्यादौ तु सामानाधिकरण्यासम्भवान्मिदिमृज्योरवयवस्येक इति

शब्दरत्न

एव दीर्घो नेति भावः । तच्चेति । इक इति पदं चेत्यर्थः । अनेनात्र सूत्रे पदोपस्थितिपक्ष इति सूचयति । "अचो ञ्णिति" (पा० सू० ७।२।११५) "ओर्गुणः" (पा०सू० ६।४।१४६) इत्यादौ तु नास्याः प्रवृत्तिः । लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौतात्पदार्थादिघटितवाक्यार्थबोधे वृत्ते निर्दिष्टस्थानिकत्वे नोपस्थितस्यापीक्पदस्य वाक्यार्थेऽनन्वयात् । "सार्वधातुक" (पा० सू० ७।३।८४) इत्यादौ तु तदुपस्थितिं विना स्थान्याकाङ्क्षाशान्त्यभावेन बोध एव नेति विशेषः । एवं च पदश्रुतिनिमित्तैषा पदैकवाक्यतयाऽन्वयवत्यन्तरङ्गा । स्थानषष्ठीत्वनिर्णये उपस्थिताऽलोन्त्यपरिभाषाया अनन्त्यस्य गुणव्यावृत्तये वाक्यैकवाक्यतयाऽन्वय इति बहिरङ्गा सा, तदाह—इगन्ताङ्गस्येत्यादि । मृज्योरवयवस्येति । एवं च स्थानषष्ठीत्वाभावनिर्णयेन "अलोऽन्त्यस्य"

तत्त्वाऽऽदर्शः

सामानाधिकरण्यासंभवात् मिदिमृज्योरवयवस्येको गुण इति सूत्रार्थः । सिचिवृद्धिः परस्मैपदेषु इत्यादौ च इगन्ताङ्गस्य वृद्धिरिति सामानाधिकरण्येनान्वयः । विधिसूत्रे अङ्गस्येत्यस्य स्थानषष्ठीत्वेन अलोऽन्त्यपरिभाषोपस्थितिः, सूत्रस्य वृद्धिविधायकत्वेन इक्परिभाषोपस्थितिः । परम्, इक्परिभाषा पदश्रुतिनिमित्ता, पदैकवाक्यतयाऽन्वयवतीचेतीयमन्तरङ्गा, अतः अस्याः विधिसूत्रे प्रथमोपस्थितिः । स्थानषष्ठीत्वनिर्णये सति अनन्त्यस्य गुणव्यावृत्तये उपस्थितालोन्त्यपरिभाषायाः वाक्यैकवाक्यतयाऽन्वयत्वेन सा बहिरङ्गा, इत्यस्याः पश्चादुपस्थितिरिति बोध्यम् । ओर्गुणः, अचोञ्णिति, इत्यादौ तु नास्याः प्रवृत्तिः । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानांपारदौर्बल्यमर्थविप्रकर्षात्' इति जैमिनीयसूत्रेण लैङ्गिकविनियोगस्य श्रौतविनियोगापेक्षया दौर्बल्यबोधनात् । अत्र च हेतुः अर्थविप्रकर्षः । तथाहि—

सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते । अर्थप्रकाशनसामर्थ्यरूपस्यलिङ्गस्य स्वतोविनियोजकत्वासंभवात्तेन विनियोजकश्रुतिं कल्पयित्वा विधीयमानस्य विनियोगस्य

सम्बध्यते। यत्तु इक एव स्थाने इति प्राचा व्याख्यातम्, यच्च तट्टीकाकृतो-क्तमनियमप्रसङ्गेनियमार्थमिदमित्यादि, तत्सर्वं भाष्यविरोधादुपेक्ष्यम्।

शब्दरत्न

(पा० सू० १।१५२) इत्यस्य प्रवृत्तिरेव नेति भावः। नियमार्थमिदमिति। तत्तद्विधायकैर्विहितयोर्गुणवृद्ध्योः "अलोऽन्त्यस्य" (पा० सू० १।१।५२) इतिवदिद-मपि स्थानिनियमार्थमिति तदाशयः। तत्सर्वं भाष्येति। द्वयोर्नियमयोः "सार्व-धातुक—" (पा० सू० ७।३।८४) इत्यादावविरोधेनेग्रूपस्यान्त्यस्येत्यर्थो वाच्यः। अन्त्यस्येक इति वा। उभयथाऽपि द्वयोर्विशेष्यविशेषणभावसत्त्वात्तच्छेषपक्षे पर्यव-सानम्। सः "अलोऽन्त्यस्य" (पा० सू० १।१।५२) इति नियमः शेषो विशेषण-मस्येति तदर्थः। तस्य "अलोऽन्त्यस्य" (पा० सू० १।१।५२) इत्यस्य विशेषण-मिति वा। एवं च "मिदेर्गुणः (पा० सू० ७।३।८२) इत्यादौ परस्पर-

तत्त्वाऽऽदर्शः

विलम्बेनोपस्थितिः। निरपेक्षो रवः श्रुतिः, इत्यस्याः निरपेक्षत्वेन स्वतःविनियोजक-त्वात् एतत्कृतविनियोगस्य सत्वरमुपस्थितिः, इत्यस्याः प्राबल्यम्। अतएव च "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यत्र द्वितीयाश्रुत्या गार्हपत्योपस्थानाङ्गत्वम्, नतु इन्द्रोपस्थानाङ्गत्वम्। एवञ्च प्रकृते प्रथमतः श्रौतात्पदार्थादिघटितवाक्यार्थबोधे वृत्ते निराकांक्षत्वेनोपस्थितस्यापीक्पदस्य वाक्यार्थेऽनन्वयः। "सार्वधातुक" इत्यादौ तु इक्पदोपस्थितिं विना स्थान्याकांक्षाशान्त्यभावेन बोधएव न स्यादितितत्रोपस्थिति-रस्याः, एतावानेव द्वयोर्विशेषः।

अत्र केचन — इदं सूत्रम्, अलोऽन्त्यस्येति सूत्रवत् नियमार्थमितिप्राहुः। परं भाष्यविरोधादिदंमतमुपेक्ष्यम्। अयंभावः—सार्वधातुकार्धधातुकयोः इतिसूत्रेऽविरोधेन द्वयोर्नियमयोः अलोऽन्त्यस्य इकोगुणवृद्धी इति सूत्रयोः प्रवृत्त्या इग्रूपस्यान्त्यस्य गुणः, अन्त्यस्येकोगुण इति वा सूत्रार्थः, तथाच—भवतीत्यादिलक्ष्ये उभयोरप्यर्थयोः न दोषः, परं 'मिदेर्गुणः' इत्यादौ परस्परविरोधादनयोस्त्यागे 'मेदती'त्यादिलक्ष्ये सर्वादेशगुणापत्तिः स्यात्। अतएव च तच्छेषपक्षं दूषयित्वा पदोपस्थितिपक्षस्य भाष्यकृता समर्थनंकृतम्। यद्यपि मिदेर्गुण इत्यादौ मिदः इः मिदिः तस्य मिदेः

तच्छेषपक्षं दूषयित्वा पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वादित्याहुः। तच्छेषपक्षेऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोऽस्माभिः।

---

शब्दरत्न

विरोधादनयोस्त्यागे सर्वादेशगुणापत्त्या तद्विरोध इति भावस्तदाह—तच्छेषपक्षमिति। दूषणोद्धारस्त्विति। "मिदेः—" इत्यत्र मिद इः मिदिस्तस्येति व्याख्यानान्न दोषः। "पुगन्त" (पा०सू०७।३।८६) इत्यत्र पुक्यन्तो लघ्वी उपधेति व्याख्येयमित्यादि भाष्योक्तदूषणोद्धारस्त्वित्यर्थः। न च यापयति, क्ष्मापयतीत्यादौ दोषः। गुणे कृते वृद्ध्या रूपसिद्धेः। अत एव "समयाच्च यापनायाम्" (पा०सू०५।४।६०) इति निर्देशः सङ्गच्छते, तदाह—कौस्तुभे स्पष्टीकृत इति। नन्वेवं तर्हि किमर्थं प्राचां पक्ष उपेक्षित इति चेच्छृणु, लघूपधांशे इक्परिभाषानुपस्थितावनिग्लक्षणत्वाद्भिन्नमित्यादौ गुणनिषेधानापत्तिभिया स उपेक्षित इति। क्नोः कित्वस्यानिग्लक्षणत्वेऽपि गुणनिषेधप्रवृत्तिज्ञापकत्वाश्रयणे तु तस्य पदोपस्थितिपक्षज्ञापकत्वमेवोचितमिति दिक्।

---

तत्त्वाऽऽदर्शः

गुण इत्यर्थकरणेन, 'मृजेर्वृद्धि'रितिसूत्रे अच इत्यपकर्षणेन मृजेरचोवृद्धिः इत्यर्थेन, भिनत्तीत्यादौ दोषवारणायावश्यकत्वेन 'पुगन्तलघूपधस्यचे'ति सूत्रे पुक्यन्तः पुगन्तः, लघ्वीउपधा लघूपधा तस्य लघूपधस्येति व्याख्यानेन, '–ऋच्छत्यृताम्' इतिसूत्रे ऋकार प्रश्लेषेण ऋच्छत्यत्रयवऋकारस्य गुण इतिसूत्रे 'उरङ्गुिण' 'दृश' इतियोगं विभज्य, 'दृश' इत्यत्र'उ'रित्यनुवर्त्य दृशधात्ववयवऋकारस्य गुण इति सूत्रार्थेन, एवमेवान्यत्रापि सर्वत्रेष्टसिद्धौ न तच्छेषपक्षे दूषणावसरस्तथापि पुगन्तलघूपधस्यचेतिसूत्रे लघूपधांशे इक्परिभाषानुपस्थितावनिग्लक्षणत्वात् भिन्नमित्यादिलक्ष्ये 'क्ङितिचे'ति सूत्रस्याप्रवृत्त्या गुणनिषेधानापत्तिभिया स उपेक्षित इति बोध्यम। नच 'त्रसिगृधिधृषिक्षिपेःक्नुः, इति सूत्रे क्नोः कित्करणसामर्थ्यादनिग्लक्षणेऽपि क्ङितिचेतिसूत्रप्रवृत्त्या भिन्नमित्यादिलक्ष्ये न दोष इति वाच्यम्, कित्करणसामर्थ्यादेतादृशज्ञापनकल्पनापेक्षया लाघवात्पदोपस्थितिपक्षस्यैव ज्ञापनौचित्यात्। पूर्वकल्पे मृजेर्वृद्धिरितिसूत्रेऽचइत्यस्यापकर्षे 'अमाट्' इत्यत्राटोवृद्धिवारणायानन्त्यविकारेऽन्त्यसदेशस्येतिपरिभाषाऽवश्यमाश्रयणीयास्यात्। अथ च 'ऋच्छात्यृतामिति' सूत्रे ऋकारप्रश्लेषेगौरवम्। 'ऋदृशोऽङ्गुिण' इतिसूत्रे योगविभागाश्रयणे च गौरवमिति बोध्यम्।

अचां मध्य इति। यत्तु प्राचोक्तमन्त्यादचः पर इति। तन्न। "शे मुचादीनाम्" (पा०सू० ७।१।५९) इत्यादावन्त्यस्याचोऽसम्भवात्। तस्यैवान्तावयव इति। तेन त्रपूणीत्यादौ अङ्गस्य नान्तत्वेन दीर्घः सिद्धः। परादित्वे स न सिध्येत्। अभक्तत्वे तु वहंलिह इत्यत्र "वहाभ्रेलिहः" (पा०सू०३।२।३२)

शब्दरत्न

इत्यादाविति। आदिना झलन्तलक्षणो नुम्, इदितो नुमित्यादि च। अचोऽसम्भवादित। नुमो मित्त्वं तु ज्ञानानीत्यादौ चरितार्थमिति मुचादावन्त्यस्यैव स्यादिति भावः। दीर्घः सिद्ध इति। तच्छब्देन यस्य विहितः स समुदायः परामृश्यते इति भावः। यद्यपि तस्यान्त्याच इति व्याख्यानेऽपि भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य "दीधीवेवीटाम्" (पा०सू० १।१।६) इति निषेधारम्भेण लोकव्यवहारेण चावयवावयस्य समुदायावयवत्वाङ्गीकारादत्र न दोषः, तथाऽपि तथा

तत्त्वाऽऽदर्शः

अचांमध्येइति। मिदचोऽन्त्यात्परः। अस्मिन्सूत्रेऽचइति निर्धारणे षष्ठी। अचांमध्येयोऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवोमित्स्यादिति सूत्रार्थः। तथाच 'इदितोनुम् धातोः इति सूत्रेऽस्याःपरिभाषायाः प्रवृत्या निन्दतीत्यादिलक्ष्ये णिदिधात्ववयवइकारोत्तरनुमः श्रवणम्। अत्र तस्यैवेतिकथनेन तच्छब्देन समुदायः परामृश्यते, एवञ्च समुदायस्यान्तावयवोमित् इति निष्पन्नम्। अतएव, त्रपूणि, वारीणीत्यादौ अङ्गस्य नान्तत्वेन 'सर्वनामस्थानेचासम्बुद्धौ' इतिसूत्रेण दीर्घसिद्धिः, अन्यथा—अर्थात् परादित्वे दीर्घो न स्यात्। नच लोकव्यवहारेण वा 'भविते'त्यादि लक्ष्ये तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य निषेधाय कृतस्य 'दीधीवेवीटामिति सूत्रारम्भेण च अवयवावयवः समुदायावयवो भवतीति न्यायाङ्गीकारेण नोक्तलक्ष्ये दोषावसर इतिवाच्यम्, पञ्चारत्नीनीत्यादिलक्ष्ये पदस्य विभज्यान्वाख्यानपक्षे उत्तरपदस्यापि नान्तत्वेन द्विगुसमासे इगन्तादुत्तरपदेपरे यत्संख्यावाचिपूर्वपदम्प्रकृत्या इत्यर्थक 'इगन्तकालकपालभगालशरावेषुद्विगौ', इतिसूत्रेण स्वरानापत्तेः। पूर्वोक्तोर्थस्वीकारादेव तानितानीत्यर्थे 'शेश्छन्दसि' इति शेर्लोपे 'तातापिण्डानाम्' इति लक्ष्ये नलोपसिद्धिः, प्रातिपदिकान्त्यावयवस्यलोपविधानात्।

इति खशि "अरुर्द्विषद्—" (पा० सू० ६।३।६७) इति मुमोऽनुस्वारो न स्यात्, अपदान्तत्वात्। यत्तु अभक्तत्वे त्रपूणीति दीर्घो न स्यादिति, तत् "तदादिग्रहणं स्यादिनुमर्थम्" इत्यङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम्।

स्थानेयोगेति। स्थानेन योगोऽस्या इति विग्रहः। निपातनादेत्वम्।

अनेकविधमिति। स्थानार्थगुणप्रमाणकृतमित्यर्थः। बलीय इति। तेन चेता स्तोतेत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः॥

---

शब्दरत्न

न व्याख्यातं, पञ्चारत्नीनीत्यादौ पदस्य विभज्यान्वाख्याने उत्तरपदस्यापि नान्तत्वापत्तौ "इगन्त–" (पा०सू० ६।२।२९) इति स्वरानापत्तेरिति स्पष्टं भाष्यादौ। त्रपूणीत्युपलक्षणं, 'ता ता पिण्डानाम्' इति नलोपसिद्धेः। तानि तानीत्यर्थे "शेश्छन्दसि—" (पा० सू० ६।१।७०) इति शेर्लोपे तदुदाहरणम्।

स्थानेनेति। स्थानशब्दार्थेनेत्यर्थः। तन्निरूपितसम्बन्धः षष्ठ्यर्थो न तु तद्रूपः सम्बन्धस्तदर्थ इति अनेन ध्वनयति। एत्वमिति। व्यधिकरणबहुव्रीहिरप्यत एवेति बोध्यम्।

गुणप्रमाणेति। प्रमाणस्य ह्रस्वत्वादेर्गुणत्वेऽपि ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः। गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रम्। तेन "अनान्तर्यमेवैतयोरान्तर्यम्" इत्यादिस्थानेऽन्तरमसूत्रस्थभाष्येण न विरोधः। अन्तरतमाभाव एव गुणविधौ ऋकाराकारयोः सादृश्यमिति तदर्थः। बाह्यानां साक्षाद्वर्णावृत्तित्वेऽप्यौपचारिकं गुणत्वं बोध्यम्।

---

तत्त्वाऽऽदर्शः

नच मितोऽभक्तत्वमेवास्तु इतिवाच्यम्, 'वहंलिह' इत्यादिलक्ष्ये 'वहाभ्रे लिहः' इतिसूत्रेण खशि 'अरुर्द्विषदजन्तस्यमुम्', इतिसूत्रविहितमुमोऽनुस्वारानुपपत्तिःस्यात् अपदान्तत्वात्। नच अन्त्यादचःपरोमिदित्येवसूत्रार्थोऽस्त्वितिवाच्यम्, मुञ्चति, लुम्पतीत्यादिरूपासिद्धेः, शेमुचादीनामित्यादावन्त्यस्याचोऽसंभवात्। नच मित् ग्रहणसामर्थ्यात्सिद्धिः, ज्ञानानीत्यादौ तस्य चारितार्थ्यात्।

तस्मिन्निति सप्तम्यन्तानामनुकरणम् । निःशब्दो नैरन्तर्यपरः । दिशिरुच्चारणक्रियः । अचि यणित्युक्ते व्यवहिते ऽव्यवहिते च सति

---

शब्दरत्न

अनुकरणमिति । अचीत्यादिसप्तम्यन्तार्थकस्य स्वतन्त्रतच्छब्दस्य निर्देशो न स्वरूपपरम्, व्याख्यानाद्, बहुलक्ष्यसंस्कारानुरोधाच्च । सप्तमी तु सप्तम्यन्तामेव तच्छब्दार्थत्वमिति बोधनाय । तद्बोध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय चेति भावः । शब्दार्थकत्वेन त्वनुकरणत्वव्यवहार इति बोध्यम् । दिशिरुच्चारणेति । अत एव "जनपदे लुप् (पा० सू० ४।२।८१) इत्यादौ न दोषः । नह्यर्थ ऊच्चारितो नापि शब्दस्य निरन्तर इति भावः । अचि यणित्युक्ते इति । अचि उपश्लिष्टस्य यणित्युक्ते इत्यर्थः । इदं "संहितायाम्" ( पा० सू० ६।१।७२ ) इति सूत्रे भाष्ये स्पष्टम् ।

---

तत्त्वाऽऽदर्शः

तस्मिन्निति । अत्रप्राञ्चः, तस्मिन्नित्यौपश्लेषिकाधिकरणबोधकसप्तम्यन्तानामनुकरणम्, निर्दिष्टे इतिसतिसप्तमी, तथाच औपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदघटितेशास्त्रे निर्दिष्टे पूर्वस्येत्युपतिष्ठते इति सूत्रार्थः ।

नव्यास्तु—अत्र सूत्रे उपश्लिष्टपदाध्याहारेण निर्दिष्टे इति औपश्लेषिकेऽधिकरणे-सप्तमी, 'उपपदविभक्तेःकारकविभक्तिर्बलीयसी'ति न्यायात् । नतुसतिसप्तमी, 'तत्रच दीयते' इतिसूत्रे कैयटोक्तत्वात् । उप = समीपे । श्लेषः = सम्बन्धः, अर्थात् समीपवृत्तित्वम्, तच्च वर्णयोः बौद्धंबोध्यम् । इकोयणचीत्यादौ अचि यणित्युक्ते व्यवहितेऽव्यवहिते च प्राप्तौ, एवमेव पूर्वस्य च परस्य च प्राप्तौ पूर्वस्यैवाव्यवहितस्यैवेति नियमार्थमिदंसूत्रम् । औपश्लेषिकाधिकरणसप्तमीस्वीकारादेव 'कर्तृकर्मणोःकृति' इतिसूत्रे नास्याः परिभाषायाः प्रवृत्तिः ।

अत्रसूत्रे तस्मिन्निति सप्तम्यन्तपदार्थकस्वतन्त्रस्य सर्वनाम्नस्तच्छब्दस्य निर्देशो नत्वनुकरणम्, व्याख्यानात्, बहुलक्ष्यसंस्कारानुरोधाच्च । अन्यथा अनुकरणपक्षे 'तस्मिन्नणि'चेतिसूत्रे एवास्याः प्रवृत्तिः स्यात्, इकोयणचीत्यादौ न स्यात् ।

नन्वेवं तस्मिन्नितिसप्तम्याश्रयणमव्यर्थमितिचेन्न, सप्तम्यन्तानामेव तच्छब्दार्थत्वमितिबोधनाय, निर्दिष्टे इत्यनेनसह सामानाधिकरण्याय च सप्तम्याश्रयणस्यावश्यक-

प्राप्तमव्यवहित एवेति, पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते। अव्यवहितस्येति तु फलितार्थकथनम् ।

परस्य यदिति । "तस्मादित्युत्तरस्यादेः" इति तु न सूत्रितम । आदे-

शब्दरत्न

फलितेति । सप्तम्यन्तार्थेऽव्यवहिते षष्ठ्यन्तार्थोऽप्यव्यवहित एवेति भावः ।

न सूत्रितमिति । "स्वं रूपम्" ( पा० सू० १।१।६८ ) इत्यतः प्रागिति शेषः। तत्र "आदेः" ( पा० सू० १।१।५४ ) इति पृथग्वाक्यं, तत्र "उत्तरस्य" इत्यनुवर्त्तते स्थानषष्ठी चेयं, पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसम्बन्धि, उत्तरस्य स्थाने विधीयमानं

तत्त्वाऽऽदर्शः

त्वात् । अत्र निःशब्दो नैरन्तर्ये, दिशिरुच्चारणे, तथाच—सप्तम्यन्तार्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्यमिति सूत्रार्थः । परिभाषोपस्थितौ सप्तम्यर्थपदार्थो लिङ्गमित्याहुः ।

वस्तुतः—प्राचोक्तमेव सम्यक्—यतो हि, अत्रसूत्रे निर्दिष्टे इत्यंशस्य विधेयत्वन्तदा तस्मिन्नित्यंशस्य तद्विशेषणत्वेन उद्देश्यदलाप्रसिद्धिः, यदि च न विधेयत्वं विवक्ष्यते, तदा औपश्लेषिकसप्तम्यन्तार्थेऽव्यवहितोच्चारितत्वस्य केनाप्यविधानात्, सप्तम्यन्तार्थेऽव्यवहितोच्चारिते इत्यादिपूर्वोक्तार्थासिद्धिः ।

नापिच औपश्लेषिकेत्युक्त्या 'कर्तृकर्मणोःकृति' इत्यादावस्याः प्रवृत्तिः, तत्र 'उभयप्राप्तौकर्मणि' इतिलिङ्गात् सप्तम्याआश्रयणात् । अस्याः परिभाषायाः अंशत्रयम्विधेयम् । अव्यवहितत्वम्, विधेयान्वयिषष्ठ्यर्थः, पूर्वत्वञ्चेति, यो हि अंशः सिद्धः बाधितो वा तमंशंपरित्यज्य परिभाषया अन्यांशोपस्थितिर्भवति । 'शितुक्' इत्यादौ परिभाषया अंशत्रयोपस्थितिः । इकोयणचीत्यत्र षष्ठ्यंशस्यसिद्धत्वेन तद्रहितांशद्वयोपस्थितिः । 'आनेमुक्' इत्यादि आगमविधावपि अनयापरिभाषया पूर्वसम्बन्धित्वनिर्णयः । अत्रसूत्रे पूर्वस्येति न स्थानषष्ठी यतोहि तत्तद्विधिभिरेवसम्बन्धस्य निर्णीतत्वेन 'षष्ठीस्थानेयोगा' इतिसूत्रस्याप्रवृत्तेः ।

नच परिभाषाणां नियमत्वमसङ्गतमिति वाच्यम्, यदि परिभाषासूत्रं नस्यात्तदा व्यवहितादावपि विधिसूत्रप्रवृत्तिःस्यादेतावता तासां नियमार्थत्वात् ।

परस्येति । "आदेःपरस्य" परस्य यद्विहितं तत्तस्यादेर्बोध्यमिति सूत्रार्थः ।

रित्यंशस्य सर्वादेशबाधकत्वापत्तेः। सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति ॥

---

शब्दरत्न

चादेर्बोध्यमिति वाक्यार्थद्वयं, वाक्यभेदसामर्थ्याच्च "आदेः" इत्यंशं विनापि क्वचिदंशान्तरप्रवृत्तिः। "आदेः" इत्यंशस्त्वनुवृत्तोत्तरस्येत्यस्यावृत्त्या परत्वबोधकशब्देन यत्र विधानं तत्रैवेति "नित्यं ङितः" (पा० सू० ३।४।९९) इत्यादौ न प्रवर्त्तत इति भावः। वक्ष्यतीति। न च "अनेकाल्" (पा० सू० १।१।५५) इत्यतः पूर्वमेव "तस्मिन्निति निर्दिष्टे पूर्वस्य" (पा० सू० १।१६६) "तस्मादित्युत्तरस्यादेः" इति सूत्रे कुतो न पठिते इति वाच्यम्। "आदेः" इत्यंशे "षष्ठीस्थाने–" इत्यस्यासम्बन्धे "आज्जसेरसुक्" (पा० सू० ७।१।५०) इत्यादावपि तस्य प्रवृत्त्यापत्तेः। सम्बन्धे मध्ये "तस्मिन्निति–" "तस्मादिति–" अनयोरपि तत्सम्बन्धे तयोरप्यागमविषयेऽप्रवृत्त्यापत्तेरिति दिक्।

---

तत्त्वाऽऽदर्शः

ननु लाघवात् स्वंरूपमिति सूत्रात्प्राक् तस्मादित्युत्तरस्यादेरित्येव न्यस्यताम्, किमिति 'आदेःपरस्य', तस्मादित्युत्तरस्येति पृथक् सूत्रं विधीयते, अस्मिन् पक्षे च आदेरिति पृथग्वाक्यं मत्वा तत्रोत्तरस्येत्यनुवर्त्य स्थानषष्ठींचाश्रित्य पञ्चमीनिर्देशेन विधीयमानं यत्कार्यं तदुत्तरसम्बन्धि, उत्तरस्यस्थाने विधीयमानञ्चादेर्बोध्यमिति वाक्यार्थद्वयंविधाय, वाक्यभेदसामर्थ्याच्च आदेरित्यंशंविनापि प्रत्ययविधौ, आगमविधौ, वा अंशान्तरप्रवृत्तिस्वीकारः। नचैवं क्वचित् तस्मादित्यंशंविनाऽपि आदेरित्यंशप्रवृत्त्या 'नित्यंङित' इत्यादौ दोषःस्यादितिवाच्यम्, अनुवृत्तोत्तरस्येत्येस्य प्रवृत्तिस्वीकारात्, इतिचेन्न अष्टावितीष्टरूपासिद्धेः। अयंभावः, उक्तन्यासकल्पे अष्टन्शब्दात् जस्विभक्तौ 'चुटु' इत्यनेन जकारस्येत्वे 'अष्टनआविभक्तौ' इतिसूत्रेण नकारस्यात्वे अष्टाअसितिस्थिते अनेकाल्शित्' इत्यनेन परत्वात् आदेःपरस्येत्यस्य बाधानापत्त्या आदेरेवादेशापत्त्या विभक्तिसकारस्य रुत्वे विसर्गे च कृते 'अष्टौः, इति रूपंस्यात्। नचोक्तन्यासस्य अनेकाल् इत्यतःप्राक् कृते न दोषावसर इतिवाच्यम्, एवंकृते तत्रादोषेऽपि 'आज्जसेरसुक्' इतिसूत्रे तस्मादित्युत्तरस्येतिवत् आदेरित्यंशस्यापिप्रवृत्त्या अकारस्यासुगागमे 'देवासः, 'ब्राह्मणास, इतिरूपासिद्धेः।

"अनेकाल्" (पा० सू० १।१।५५) ॥ शित उदाहरणम् "इदम इश्"। इतः। यत्तु वृत्तिकृता "जश्शसोः शिः" (पा० सू० ७।१।२०) इत्युदाहृतं, तन्न सर्वादेशतायाः प्राक् शित्त्वस्यैवालाभात्। तत्र हि डाणलोरिवा नुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वमिति सिद्धान्तः। इत्यादाविति। आदि-शब्देन "अतो भिस ऐस्" (पा० सू० ७।१।९) इति गृह्यते। परत्वादिति। अत एव "आदेः परस्य" (पा० सू० १।१।५४) इति पृथक् क्रियते इत्युक्तम्। "उत्तरस्य" इत्यंशस्तु औशैसोरपि प्रवर्तत एव।

यत्तु प्राचा "आदेः" इति सूत्रं विवृण्वता पञ्चमीनिर्देशेनेत्याद्युक्तं, तद सम्बद्धमिति स्पष्टमेव।

परनित्येति। परान्नित्यं यथा। तुदति। रुणद्धि। परमपि लघूपधगुणं बाधित्वाश्शनमौ। तथारन्धेर्णिच् रन्धयति। परामप्युपधावृद्धिं बाधित्वा "रधिजभोः—(पा० सू० ७।१।६१) इति नुम्। न च सोऽपि शब्दान्तर-प्राप्त्या ऽनित्य इति वाच्यम्। कृताकृतप्रसङ्गमात्रेणापि क्वचिन्नित्यता-भ्युपगमात्। अन्तरङ्गं यथा—उभये देवमनुष्याः। इह "प्रथमचरम"

---

शब्दरत्न

डाणलोरिवेति। आदेशानां प्रत्ययाधिकारे पाठेऽपि वाक्यार्थबोधोत्तरमेव प्रत्यय-त्वज्ञानेनोपदेशे णकारे इत्त्वाप्रवृत्तेस्तदुत्तरं लक्ष्ये प्रवृत्तिकाले इत्त्वेऽप्यनेकाल्त्वाक्षतेरिति भावः। प्रवर्तत एवेति। उपपादितमेतत्।

शब्दान्तरप्राप्त्येति। यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव प्रवृत्तौ कृताकृतप्रसङ्गित्वं प्रसिद्धमिति भावः। कृताकृतेति। व्यक्तिविशेषानाश्रयणेने-त्यर्थः। "वृद्ध्यौत्त्वतृज्वद्भाव" इत्यस्यत्वत्र न प्राप्तिः। साहचर्येण विभक्तिनिमि-त्तानामेव वृद्ध्यादीनां तत्र ग्रहणात्। नित्यत्वेनैव सिद्धे वाचनिकपूर्वविप्रतिषेधाश्रयणे

---

तत्त्वाऽऽदर्शः

नच तत्र 'असुटी'तिन्यासे न दोष इतिवाच्यम्, 'अश्वक्षीरे,त्यनेनापि असुडापत्या 'अश्वस्यतिवडवा' इति नामधातुप्रयोगासिद्धेः।

( पा० सू० १।१।३३ ) इति परमपि विकल्पं बाधित्वा "सर्वादीनि" (पा० सू० १।१।२७) इति सर्वनामसञ्ज्ञा विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात् । अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यत एव । तद्यथा—"अयजे इन्द्रं, ग्रामे इह, सर्वे इत्थम्" अत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते । स च यद्यपि यण्गुणयोरपवादस्तथाऽपि समानाश्रये चरितार्थः । तथा च वार्तिकम् । "इण्ङ्शीनामाद्गुणः सवर्णदीर्घत्वात्" इति ॥

---

## शब्दरत्न

फलाभावाच्चेति दिक् । अन्तरङ्गत्वादिति । भाष्ये त्वयच् प्रत्ययान्तरं न तु तयब्रादेशः, उभयीत्यत्र ङीप्तु मात्रजिति प्रत्याहाराश्रयणेन साधितः । एवं चोभयशब्दे विकल्पस्य प्राप्तिरेव नेति उक्तम् । अन्तरङ्गस्य बलवत्त्वे ज्ञापकमन्यत्र प्रपञ्चितम् । बाध्यत एवेति । निरवकाशत्वरूपस्य बलवत्त्वबीजस्याभावात् ।

---

## तत्त्वाऽऽदर्शः

अपवादोयद्यन्यत्रेति । अत्र प्राचीनाः—अयज इ इन्द्रमित्युदाहरणे अ-इ-इत्यत्र गुणःप्राप्तः, इ-इन्द्रमित्यत्र सवर्णदीर्घः प्राप्तः । तत्र परत्वं सवर्णदीर्घस्य, नित्यत्वं, पूर्वोपस्थितिनिमित्तकत्वेनान्तरङ्गत्वञ्चाद्गुणइत्यस्येतिनित्यत्वादन्तरङ्गत्वाच्च गुणेन भाव्यम्, परन्तु—अपवादस्य सर्वतो बलवत्त्वाद्यण्गुणापेक्षया सवर्णदीर्घस्यापवादत्वात्सएवस्यादितिचेदिष्टरूपासिद्धिः, किन्तु समानाश्रये 'दैत्यारिः' श्रीश इत्यादावन्तरङ्गबहिरङ्गभावस्य वक्तुमशक्यत्वेनान्तरङ्गयण्गुणौबाधित्वा दीर्घस्यचारितार्थ्येन प्रकृतेऽन्तरङ्गपरिभाषाबाधे सामर्थ्यस्योपक्षीणत्वादन्तरङ्गगुणदृष्ट्यादीर्घस्यासिद्धत्वेन निष्प्रतिपक्षत्वात्पूर्वं गुणे 'अयजेइन्द्र'मितीष्टरूपसिद्धिरित्याहुः ।

नवीनास्तु—यण्गुणनिरूपितापवादत्वं सवर्णदीर्घस्येति स्वीयोद्देश्यतावच्छेदकसवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नातिरिक्तत्वेनाद्गुणइत्युत्सर्गशास्त्रीयोद्देश्यतावच्छिन्नाजव्यवहितपूर्वत्वविशिष्टावर्णत्वावच्छिन्ने संकोचेन अयज इ इन्द्रमित्यत्राद्गुण इतिशास्त्रीयोद्देश्यतावच्छेदकाक्रान्त्या गुणोभवति, 'दैत्यारिः' इत्यादौ तदीयोद्देश्यतावच्छेदकाक्रान्त्यभावेन गुणो न भवतीति वदन्ति ।

असिद्धमिति । तेन पचावेदमित्यादावेत ऐत्वं न ।

अकृतव्यूहा इति । यद्यपि "कृतमपि कार्यं निवर्त्तयन्ति" इति परिभाषान्तरं पठ्यते फलं च तुल्यम्, तथाऽपि "अकृत—" इत्येव लघु । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायादिति भावः । नकुर्वन्तीति ।

---

शब्दरत्न

तेनेति । पूर्वा तु अन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेवेति भावः ।

न कुर्वन्तीत्यर्थं इति । यदि तु सेदुष इत्यादौ पदावधिकेऽन्वाख्याने सेद् वस्अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं सम्प्रसारणे वलादित्वाभावादिटःप्राप्तिरेव न, लक्ष्यानुरोधाच्चात्र पदावधिकमेवान्वाख्या-

---

तत्त्वाऽऽदर्शः

सेद्वसिति । सेद्वस्असितिस्थिताविट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वात् पूर्वंसम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेवनेत्यकृतव्यूहपरिभाषानिष्फलेतिशब्दरत्नकारः । न च 'वस्वेकाजाद्घसाम्' वसोःसम्प्रसारणमितिसूत्रविहितयोरिट्सम्प्रसारणयोः वसुशब्दमुच्चार्यविहितत्वेनोभयोः प्रतिपदोक्तत्वंसमानमिति प्रतिपदविधित्वात्पूर्वंसम्प्रसारणमितिवक्तुमशक्यमितिवाच्यम्, नियमशास्त्राणां निषेधमुखेनप्रवृत्त्या 'वस्वेकाजाद्घसा'मित्यस्य कृतद्विर्वचनेसत्येकाजादन्तातिरिक्तधातूत्तरस्य वसोरिडागमो न भवतीत्येतावदेवव्यापारादिडागमस्यचार्धधातुकस्येत्यनेनैवविधानात्तस्य प्रतिपदोक्तत्वाभावेन रत्नोक्तस्यैवयुक्तत्वात् । ननु निषेधमुखेनप्रवृत्तौ प्राप्तबाध, स्वार्थहानि, परार्थकल्पनेति दोषत्रयम्, विधिमुखेनप्रवृत्तौ तु परार्थकल्पनेति एकएव दोष इतिलाघवाच्छेखरे विधिमुखेनैव प्रवृत्तिर्भवतीत्युक्तम् । तथाच 'वस्वेकाजाद्घसा'-मित्यनेनैवेडागमविधानादुभयोः प्रतिपदोक्तत्वं समानम् । विधिमुखेनप्रवृत्तिर्नाम— नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं, नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं, यद्रूपं, तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचः । तथाच 'वस्वेकाजाद्घसा'मितिनियामकशास्त्रीयोद्देश्यतावच्छेदकं यत्कृतद्वित्वेसत्येकाजादन्तधात्तूत्तरत्वविशिष्टवसुशब्दत्वम्, तद्व्यापकं, 'आर्धधातुकस्येडिति'नियम्य-

-यथा "निषेदुषीम्" इत्यादौ क्सोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसार-
-णेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः ॥

इति परिभाषाप्रकरणम् ।

---

शब्दरत्न

नमिति यत्सिद्धिरित्युच्यते, तदैषा परिभाषा निष्फलेति बोद्धयम् । अत एव एषा भाष्ये न क्वापि व्यवहृतेत्यन्यत्र विस्तरेण निरूपितम् ॥

इति परिभाषाप्रकरणम्

---

तत्त्वाऽऽदर्शः

शास्त्रीयोद्देश्यतावच्छेदकव्याप्यं, यद्रूपं, धातूत्तरत्वविशिष्टवसुशब्दत्वम्, तदवच्छिन्नातिरिक्तत्वेनार्धधातुकस्येडिति नियम्यशास्त्रीयोद्देश्यतावच्छिन्ने धातूत्तरत्वविशिष्टवलाद्यार्धधातुकसंकोचेन धातूत्तरत्वविशिष्टवसुशब्दभिन्नं यद्धातूत्तरत्वविशिष्टवलाद्यार्धधातुकन्तस्येडागमो भवतीत्यार्धधातुकस्येत्यर्थसत्वात्प्रकृते सेद्वस्असित्यत्रार्धधातुकस्येत्यास्याप्राप्त्या 'वस्वेकाजाद्वसा'मित्यनेनेडागमस्य विधानादुभयोः प्रतिपदोक्तत्वन्तुल्यमिति पूर्वोपस्थितिनिमित्तकत्वेनान्तरङ्गत्वादिट्स्यादितिचेन्न, सेद्वससितिस्थितौ द्वित्वसम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वात्पूर्वंसम्प्रसारणे पश्चाद्द्वित्वे वलादित्वाभावादिडागमस्याप्राप्तेरकृतव्यूहपरिभाषानिष्फलेतितदाशयात् । वस्तुतस्तु—घटसेदुषोरित्यत्र घटसु सद्वसु इतिस्थितौ 'चार्थेद्वन्द्वः इत्यनेन द्वन्द्वे समासरूपसमुदायापेक्षप्रातिपदिकसंज्ञापेक्षयाऽन्तरङ्गत्वात्पूर्वंद्वित्वे एत्वाभ्यासलोपेचेडागमे पश्चात्प्रातिपदिकसंज्ञायां सुब्लुकि विशिष्टादोसि सम्प्रसारणेकृतेऽपीटः श्रवणंस्यादतः परिभाषास्वीकर्तव्यैवेति बोध्यम् ।

मनोरमाशब्दरत्न तत्वाऽऽदर्शे परिभाषाप्रकरणं समाप्तम् ।

---

# अथ अच्सन्धिप्रकरणम्

"इको यणचि" ( पा० सू० ६।१।७७ ) ।। प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा। "दीर्घाज्जसि च" ( पा० सू० ६।१।१०५ )

---

शब्दरत्न

ननु व्यक्तिपक्षे इकरदोपस्थाप्योकारादिभिर्दीर्घादिग्रहणं न स्यात्, उच्चारित एव शब्दः प्रत्यायको नानुच्चारित्त इति "अणुदित्" (पा०सू० १।१।६९ ) सूत्रे भाष्योक्तेः। न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तिरिति वाच्यम्, तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्त्वादित्यत आह-प्रत्याहारग्रहणेष्विति। एतेन दीर्घैकारादेर्ग्राहकशास्त्रबलेन इकारादिभिर्बोधेऽपि तेषामिक्पदवृत्त्याऽनुपस्थितत्वेन तदुत्तरप्रत्ययार्थानन्वयापत्तिरित्यपास्तम्। वृत्तिप्रयोज्योपस्थितिसत्त्वेनादोषाच्च। ननु अणुदित्सूत्रं व्यर्थम्। न च प्रत्याहाराणामाद्यवर्णेषु चरितार्थम्। अन्यसवर्णानामिव तत्सवर्णानामपि लक्षणयैव ग्रहणसिद्धेः। न च "अस्य च्वौ" ( पा० सू० ७।४।३२ ) इत्यादौ चारितार्थ्यम्। व्यक्तिपक्षेऽस्य प्रत्याहारसूत्रस्थतो भेदेनाण्त्वाभावादिति स्पष्टम् "अणुदित्"-( पा० सू० १।१।६९ ) सूत्रे भाष्ये इति चेन्न, लक्ष्यतावच्छेदकज्ञानार्थमेव तच्चारितार्थ्यात्। प्रत्याहारेष्वुक्तलक्षणं, तद्वाच्यवाच्येति च "अस्य च्वौ" ( पा० सू० ७।४।३२ ) इत्यादावपि स्वसदृशवाच्येषु लक्षणावश्यकत्वात्। अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकिका लक्षणा विधीयमानातिरिक्तविषये एव, "अप्रत्ययः" इत्यु-

---

तत्त्वाऽऽदर्शः

प्रत्याहार ग्रहणेष्विति। ननु 'उच्चारितएवशब्दः प्रत्यायको नानुच्चारित' इति अणुदित्सूत्रभाष्योक्त्या एतत्सूत्रे इकारदोपस्थाप्योकारादिभिः दीर्घोकारादीनां ग्रहणाभावेन 'वध्वागार'मिति प्रयोगे यणादेशो न स्यादितिचेन्न, प्रत्याहारग्रहणेषु तद्वाच्य वाच्ये निरूढालक्षणा इति स्वीकारेण दोषाभावात्। मानञ्चात्र 'दीर्घाज्जसिचे'ति सूत्रम्। सूत्रञ्च 'गौर्यौ' गौर्यः इत्याद्यर्थमुपन्यस्तम्, 'प्रथमयोःपूर्वसवर्ण' इतिसूत्रेऽनुवृत्ताक्पदेन दीर्घाकारादीनां ग्रहणेऽपि दीर्घैकारादीनां ग्रहणाभावेन उक्तलक्ष्ये दीर्घाप्राप्त्या सूत्रस्य वैयर्थ्यं स्यात्। 'ल्वादिभ्य' इतिनिर्देशोवाऽत्र मानम्।

इति ज्ञापकात्, "ल्वादिभ्यः" (पा० सू० ८।२।४४) इति निर्देशाच्च। तेनेकृशब्देनषट्षष्ठिर्गृह्यन्ते। यण्शब्देन सप्त। भाव्यमानत्वेन सवर्णाग्राहकत्वेऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां ग्रहणात्। अतो नास्ति यथासङ्ख्यम्। न च लक्ष्यार्थबोधात्पूर्वभाविनं शक्यार्थबोधमादाय यथासंख्यमस्त्विवति वाच्यम्, एवमपि तृतीयचतुर्थाभ्याम् ऋकारलृकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गात्।

---

शब्दरत्न

क्तेः। अत एव "त्यदादीनामः" (पा० सू० ७।२।१०२) इत्यादौ न स्वसदृशवाच्येषु लक्षणा। "नाज्झलौ" (पा०सू० १।१।१०) "अणुदित्" (पा०सू० १।१।६९) इत्यत्र तु न लक्षणा तद्बोधकाले लक्ष्यतावच्छेदकाग्रहादिति भावः। तत्र प्रमाणमाह—दीर्घादिति। अक्पदीयाकारेण स्वसवर्णग्रहणेऽपि तत्र "नादिचि" इत्येव सिद्धमिति भावः। तेन—लक्षणाङ्गीकारेण। भाव्यमानत्वेनेति विधीयमानविषये लक्षणाऽभावस्यानुपदमुक्तत्वादिति भावः। अभेदकत्वेनेति। शास्त्रे उच्चारितगुणानां भेदकत्वाभावेऽपि स्वरूपकृतभेदमादाय सप्तत्वसंख्या न विरुध्यते। यदि तु अणुदित्सूत्रेऽण्ग्रहणाद्यण् विषये गुणानां भेदकतैवोचितेति विभाव्यते, तदाऽपि चत्वारो यण इति यथासंख्यमसङ्गतमेव। तद् ध्वनयन्नाह—अतो नास्तीति। तत्खण्डने एवाग्रहो न तु सप्तत्वसंख्यायामिति भावः। शक्यार्थबोधमादायेति। "ल्वादिभ्यः" (पा०सू०८।२।४४) इत्यादिनि-

---

तत्त्वाऽऽदर्शः

ननूक्तरीत्या लक्षणास्वीकारेऽणुदित्सूत्रं व्यर्थमितिचेन्न प्रत्याहाराणामाद्यवर्णेषु तस्य चारितार्थ्यात्। नचान्यसवर्णानामिव आदिसवर्णानामपि लक्षणयैव ग्रहणसिद्धिरितिवाच्यम्, 'अस्यच्वौ' 'एरच्' इत्यादिसूत्रे प्रत्याहारग्रहणाभावेन लक्षणायाअनवसरात् 'शुक्लीभवति' इतिरूपवत् 'मालीभवति' इत्यादिरूपसिध्यर्थं सूत्रस्य चारितार्थ्यात्।

नच व्यक्तिपक्षे 'अस्यच्वौ' इति सूत्रघटकाकारस्य प्रत्याहारसूत्रस्थतोभेदेनाण्त्वाभावात् तत्र सूत्रस्याप्रवृत्त्या न चारितार्थ्यसंभव इतिवाच्यम्, लक्ष्येषु तद्वाच्यवाच्यत्वरूपस्य लक्ष्यतावच्छेदकधर्मस्य ज्ञानाय अणुदित्सूत्रस्य चारितार्थ्यात्। 'अस्यच्वौ'इत्यादौ स्वसदृशवाच्येषु लक्षणायाआवश्यकत्वेन लक्षणास्वरूपे प्रत्याहारेति, तद्वाच्यवाच्येति च उपलक्षणतया प्रवेश इतिबोध्यम्।

तस्मादिह "स्थानेऽन्तरतम" ( पा० सू० १।१।५० ) सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्याह—स्थानत आन्तर्यादिति ।

शब्दरत्न

देशोहिततात्पर्यानुपपत्तिग्रहस्य तत्सत्त्व एव सम्भवेन स बोध आवश्यकः । तत्र च यथासंख्यसहायेन वाक्यार्थे निष्पन्ने "ल्वादिभ्य" इत्यादिनिर्देशाल्लक्षणया जायमाने पुनर्वाक्यार्थबोधे लक्षितदीर्घादीनां स्ववाचकान्वयिन्येवान्वय इति भावः । स्थानेऽन्तरतमसूत्रेणैवेति । व्यक्तिपक्षे व्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासम्भवाल्लक्ष्यासिद्धेश्चेति भावः ।

परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरुपपादम् । न हि तत्र लक्षणा वक्तुं शक्या, लक्ष्यतावच्छेदकाग्रहात् । एवं च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा । एवं च "अइउण्" (मा० सू० १) इत्यादावपि जातिनिर्देश एवोचितः । अर्द्धजरतीयस्यानौचित्यात् । अत एव "अणुदित्—" (पा० सू० १।१।६९) सूत्रे भाष्ये प्रत्याहारेषु "अस्य च्वौ" (पा० सू० ७।४।३२) इत्यादौ च उक्तामनुपपत्तिमाशङ्क्य जात्याश्रयणमेव कृतम् । यथासंख्यसूत्रं च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्तते । "स्यतासी लृलुटोः" ( पा० सू० ४।१।३३ ) इत्यादौ यथा । नाप्यत्र पक्षे ऋकारादौ लकाराद्यापत्तिः । लृत्वादिजातेर्ऋकारादावभावात् । न च जातिपक्षे अणुदित्सूत्रेऽण्ग्रहणप्रत्याख्याने "उपसर्गादृति—" (पा० सू० ६।१।९१) इत्यादौ ऋकारेण लृकारग्रहणाय सावर्ण्यवचनस्थाने लृवर्णस्य ऋवदतिदेशाद् लृकारे रेफापत्तिरितिवाच्यम् । क्लृप्तशिखार्थे तस्यातिदेशस्यानित्यत्वावश्यकत्वात् । तत्पक्षेऽण्ग्रहणप्रत्याख्यानेऽपि "अप्रत्ययः" (पा० सू० १।१।६९) इत्यंशो वाक्यभेदेन विधी-

तत्त्वाऽऽदर्शः

नन्वेवं 'अस्यच्वौ' इत्यादाविव 'सनाशंसभिक्षःउः' इत्यादि उकारादिप्रत्ययविषयेऽपि लक्षणायाः संभवात् दोषात्रसर इतिचेन्न, अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकिकालक्षणा विधीयमानातिरिक्तविषयएव, सूत्रेऽप्रत्यय इत्युक्तेः । अतएव च 'त्यदादीनाम' इतिसूत्रविधेये न स्वसदृशवाच्ये लक्षणा । नापिच, 'नाज्झलौ' 'अणुदित्' इत्यत्रलक्षणा, वाक्यापरिसमाप्तिन्यायेन तद्बोधकाले लक्ष्यतावच्छेदकाग्रहात् ।

"अनचि च" (पा० सू० ८।४।४७) द्वेवेति। "यरोऽनुनासिक" (पा० सू० ८।४।४५) इति सूत्राद् वाग्रहणमनुवर्तते इति "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रे कैयटः। एवं च "सर्वत्र शाकल्यस्य" (पा० सू० ८।४।५१) इति सूत्रं तत्प्रपञ्चभूतं पूर्वोत्तरसूत्रद्वयं च नारम्भणीयमिति भावः।

---

शब्दरत्न

यमाने जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तपरसूत्रवदिति "त्यदादीनामः" (पा० सू० ७।२।१०२) इत्यादौ न दोषः। एवं चात्र यण्पदेन जात्याश्रयणेनापि न सवर्णबोधनमिति "स्वौजस्—" (पा० सू० ४।१२) इत्यादावनुनासिकस्थानेऽपि निरनुनासिक एव। अत एव स्थानेऽन्तरतमसूत्रे भाष्येऽस्य तदुदाहरणत्वमाशङ्क्य "यथासंख्यम्" (पा० सू० १।३।१०) इत्यनेनापि सिद्धमित्युक्तम्। तेनात्र तयोः फलाविशेष उक्तः। "उञः" (पा० सू० १।१।१७) इति सूत्रे नव्यानां प्रमाद एव। नच झलादिषु झकारादिभी रूपसादृश्येन सर्वझकारादिप्रतीतिरिति वाच्यम्। अगादिष्वपि किञ्चित्सादृश्यमाश्रित्य दीर्घादीनामपि ग्रहणोपपत्तौ "अणुदित्" (पा० सू० १।१।६९) सूत्रस्य, तद्वाच्येत्यस्य च वैयर्थ्यापत्तेः। "ल्वादिभ्यः" (पा० सू० ८।२।४४) इति निर्देशानामीषत्सादृश्येनापि ग्रहणमित्यर्थज्ञापकताया युक्तत्वात्। तदप्युक्तम्, अइउण्सूत्रे भाष्ये 'रूपसामान्याद्वात्सिद्धम्' इति। अणुदित्सूत्रेऽण्ग्रहणन्तुप्रत्याहाराग्रवर्णेषुणकारादिभिश्चिन्हैः प्रत्याहारसूत्रस्थोऽयमिति प्रत्यभिज्ञासत्त्वादुपायान्तरपरम्, 'आचार्याः कृत्वा न निवर्तन्ते" इति न्यायात्। इदमेवाभिप्रेत्य तत्रत्यमण्ग्रहणं प्रत्याख्यातं भाष्ये इत्याहुरिति दिक्।

---

तत्त्वाऽऽदर्शः

नव्यास्तु—'झलोझलि' इत्यादि झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणाय जातिपक्षस्य आवश्यकतयाऽच्प्रत्याहारघटितसूत्रेष्वपि अर्धजरतीयस्यानौचित्यात् जातिपक्षस्यैवोचितत्वम्, यतो हि तत्र झलामण्भिन्नत्वेन ग्राहकसूत्राप्रवृत्त्या लक्ष्यतावच्छेदकाग्रहेण लक्षणायाः वक्तुमशक्यत्वम्।

अतएव च अणुदित्सूत्रभाष्येऽनुपपत्ति 'मत्स्यच्वौ' इत्यत्राशंक्य जातिपक्षाश्रयणेनैव वारणं विहितमित्याहुः।

यत्तु "दीर्घादाचार्याणाम्" ( पा० सू० ८।४।५२ ) इति सूत्रे आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य वाक् वाक्क् इति भाष्योदाहृते विकल्पे उपपत्तिचिन्तार्थं क्लिश्यन्ते, तन्मुधैव। पूजार्थतायाः प्रामाणिकैरनुक्तेः। "त्रिप्रभृतिषु—" ( पा० सू० ८।४।५० ) इति सूत्रे शाकटायनग्रहणस्यापि तथात्वापत्तेः। न चेष्टापत्तिः, संस्कर्तेति त्रिसकारपरकैयटहरदत्तादिग्रन्थविरोधात् स्वग्रन्थविरोधाच्च। अत एव प्रातिशाख्यभाष्ये ऽपि "आत्वा रथम्" इति मन्त्रे तकारस्य द्वित्वविकल्प उदाहृतः। माधवेन चास्ते इत्यत्र सकारस्य द्वित्वविकल्प उक्तः। एवं च धात्रंश इत्यत्र तकारस्य द्वित्वमसदित्युक्तिरेवासतीति दिक्॥

---

शब्दरत्न

क्लिश्यन्त इति। "अनचि" इत्यनुवर्त्य पर्युदासपरतया हलि परे एव नित्यनिषेध इति व्याख्यानेनेति भावः। विकल्प उक्त इति। एवं च "सर्वत्र शाकल्यस्य" (पा०सू० ८।४।५१) इतिवदिदमपि प्रपञ्चार्थमिति भावः। असतीति। यत्तु—"नादिनी—" (पा०

---

तत्त्वाऽऽदर्शः

अनचिचेति। अचः परस्य यरो द्वे वास्तोनत्वचि इति सूत्रार्थः। अत्र 'यरोऽनुनासिकेऽनुनासिको वा' इति सूत्रात्, यर इति वा इति चानुवर्तते।

एवञ्च 'सर्वत्रशाकल्यस्य' इति सूत्रं पूर्वोत्तरसूत्रद्वयं 'त्रिप्रभृतिषुशाकटायनस्य' 'दीर्घादाचार्याणाम्' इति नारम्भणीयम्।

अत्र केचित्—'दीर्घादाचार्याणा' मिति सूत्रे आचार्यग्रहणं पूजार्थमित्यभिप्रेत्य 'वाक् वाक्' इति भाष्योदाहृते विकल्पे तत्सङ्गमनार्थं 'अनचि' इति सूत्रेऽनुवर्त्य तस्य पर्युदासपरतया व्याख्यानेन हलिपरएव नित्यनिषेधइत्याहुस्तदसङ्गतम्, प्रामाणिकैः कुत्रापि पूजार्थतायाअनुक्तेः। पूर्वसूत्रे शाकटायनग्रहणस्यापि तथात्वापत्तेः। नचेष्टापत्तिः, सँस्कर्तेति त्रिसकारपरकैयटहरदत्तादिग्रन्थविरोधात्। अतएव प्रतिशाख्यभाष्येऽपि 'आत्वारथमिति' मन्त्रे तकारस्य द्वित्वविकल्पउदाहृतः। माधवेन च 'आस्ते' इत्यत्र सकारस्य द्वित्वविकल्प उक्तः। एवञ्च 'सर्वत्रैतिवत्' 'दीर्घादाचार्याणा'मिदमपि प्रपञ्चार्थमेवेति बोध्यम्॥

"स्थानिवदादेशः" ( पा० सू० १।१।५५ ) धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्-पदादेशा इति प्राचोक्तम्। किं तत्परिगणनमुदाहरणमात्रं वा ?। नाद्यः। सिच्क्सचङ्ङादीनां श्नादेशस्य शानचश्चासङ्ग्रहापत्तेः। नान्त्यः।

शब्दरत्न

सू० ८।४।४८) इत्यादौ वृत्तौ "अनचि–" इति प्राप्तिमुद्भाव्य "त्रिप्रभृतिषु–" (पा० सू० ८।४।५०) "सर्वत्र–" इत्यनयोः प्राप्तिमनुद्भाव्य पुनः "दीर्घात्–" (पा० सू० ८।४।५२) इत्यत्र "अनचि–" इति प्राप्तिरुद्भाविता हरदत्तेन। तस्यायमाशयः– निषेधविकल्पे प्राप्त्युद्भावनं नावश्यकम्, तद्विकल्पे विधिविकल्पस्य फलितत्वेन विधेरेव अप्राप्तविषयविकल्पसम्भवाद्, नित्यनिषेधे तु तदुद्भावनमावश्यकमिति, तन्न ; विकल्पेऽपि निषेधप्रकरणान्नञुल्लेखस्यावश्यकत्वेन प्राप्त्युद्भावनस्यावश्यकत्वात्। मध्ये नञोऽसम्बन्धो मण्डूकानुवृत्तिरग्रे इत्यत्र मानाभावाच्च। "सर्वत्र" इति सूत्रेऽस्य द्वित्वमात्रनिषेधकतेति बोधयितुं तदनुल्लेखाच्च। "त्रिप्रभृतिषु–" इत्येतद्विषये "नकारषकारयोर्द्विर्वचनाभावः" इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च। वृत्तिहरदत्तयोः "नादिन्या–" "शरोऽचि" ( पा० सू० ८।४।४९ ) इत्यनयोरपि प्राप्त्युल्लेखस्य बहुषु पुस्तकेष्वनुपलम्भाच्चेति दिक्।

चङ्ङादीनामिति। आदिना चिण्। न केवलं च्ल्यादेशानामेवासङ्ग्रह इत्याह– श्नादेशस्येति। तदभावेह्यवादिषातामित्यत्रेड् न स्यात्। क्सादेः कादीनामित्त्वं न स्यात्। शानचः शस्य च तन्न स्यात्। मा हि दर्शदित्यादौ अङि गुणो न स्यादिति भावः। ननु सिजादीनां प्रत्ययाधिकारे पाठात् श्नम्वत् प्रत्ययत्वमस्तीति न स्थानि-

तत्त्वाऽऽदर्शः

'स्थानिवदिति' धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः स्थानिवत् इति प्राचोक्तमसङ्गतम्, परिगणनस्य, उदाहरणमात्रस्य वाऽसम्भवात्। तथाहि—आद्ये, च्ल्यादेशानां श्नादेशस्य शानचश्चासंग्रहापत्तिः। अन्त्ये, अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यापत्तिः। स्थानिवत्वाभावे हि 'अवाधिषाताम्' इत्यत्रेड् न स्यात्, 'अधुक्षत्' इत्यत्र क्सादेः कादीनामित्वं न स्यात्, प्रत्ययत्वाभावात्। एवमेव, शानचः शस्येत्वं न स्यात्। 'माहिदर्शत्', इत्यादौ अङि गुणो न स्यात् 'ऋदृशोऽङि गुणः' इति सूत्रात्। एतस्य सूत्रस्याङ्गाधिकारे पाठात्।

अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यात्। प्रस्तुत्येति वृत्तिकारोक्तं तदुदाहरणमपिमन्दम्। क्त्वामात्रस्यानव्ययत्वात्, कृत्त्वेन सिद्धत्त्वाच्चेत्याशयेनाह—आदेश इति। अनल्विधाविति किम्? तेन, तस्मात्, तस्य, तस्मिंश्च विधौ मा भूत्। तत्र अला विधौ यथा—व्यूढोरस्केन। अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य "अड्व्यवाये" (पा० सू० ८।४।२)

शब्दरत्न

वत्त्वोपयोगः। न च तेषां प्रत्ययत्वे च्लिविधानं व्यर्थम्, "मन्त्रे घस"–(पा० सू० २।४।८०) इति सूत्रे चङङ्सिचामिति त्रयाणां ग्रहणे गौरवापत्तेः। सिचो लुकि तद्विषये "आदिः सिच–" (पा० सू० ६।१।१८७) इति स्वरापत्तेश्चेति भाष्यकैयटयोः स्पष्टमित्यरुचेराह—चेति। तेनाग्रहीदित्यादाविडादेशस्य ईटोऽसङ्ग्रह इत्यर्थः। इदमुपलक्षणम्, अव्ययस्य पदात्पृथग्ग्रहणवैयर्थ्यमपि दोष इति बोद्धयम्। अव्ययस्येति। अत्र त्वस्यैव दोषत्वमिति भावः। नन्वव्ययस्याङ्गत्वे फलाभावेन प्रत्ययस्य लुका लुप्तत्वेन च तदप्राप्त्या कथं तेनाव्ययसङ्ग्रहोऽत आह–पदेति। तत्वं च ततः परस्य निघातार्थमावश्यकं प्रत्ययलक्षणेन सुबन्तत्वाच्च तत्त्वमिति भावः। सिद्धत्वाच्चेति। अत एवात्र तुक्। न च "सर्वे सर्वपदादेशा" इति न्यायेन प्रस्तुत्वा इत्यस्य स्थाने प्रस्तुत्य इत्यादेशे तस्याव्ययत्वसिद्धिरिति वृत्त्याशय इति वाच्यम्, अर्थवत्येव स्थानिवत्त्वमिति तात्पर्येण क्त्वोऽप्यर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाभावादिति दिक्। अनल्विधाविति किमिति। विधिग्रहणविशिष्टं किमर्थमिति प्रश्नः।

तत्त्वाऽऽदर्शः

ननु सिजादीनां प्रत्ययाधिकारे पाठात् अम्वत् प्रत्ययत्वसत्वेन न स्थानिवत्त्वोपयोग इति चेन्न, तेषां प्रत्ययत्वे च्लिविधानवैयर्थ्यापत्तेः।

नच 'मन्त्रेघसेतिसूत्रे चङ् अङ् सिचां त्रयाणां ग्रहणे गौरवापत्तिः, सिचोलुकि च 'आदिःसिचोऽन्यतरस्याम्' इति सूत्रेण स्वरापत्तिश्चेति च्लिविधानं सार्थकमिति वाच्यम्, अग्रहीत्' इत्यत्र 'इट ईटि' इति सिज्लोपसिद्धये स्थानिवत्वावश्यकत्वात्। अन्यथा इडादेशस्य दीर्घस्येटोऽसंग्रहे स्थानिवत्वाभावेनेटःपरत्वाभावात् सिज्लोपो न स्यादिति बोध्यम्।

इति णत्वं प्राप्तम् । अलः परस्य । द्यौः पन्थाः । हल्ङ्यादिलोपो न । अलो विधौ द्युकामः । वलि लोपो न । अलि विधौ । यजेः क्तः । क इष्टः । "हशि च" (पा० सू० ६।१।११४) इत्युत्वं न । अल् चेह स्थान्यवयव एव गृह्यते तेन रामायेत्यादौ "सुपि च" (पा० सू० ७।३।१०२) इति दीर्घः सिद्धः ।

---

शब्दरत्न

णत्वं प्राप्तमिति । न च सकारे स्वतोऽड्भिन्नत्वसत्त्वादड्भिन्नव्यवाये नेति निषेधात्कथं णत्वप्राप्तिरितिवाच्यम्, अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् । इदं चासिद्ध वत्सूत्रे कैयटे स्पष्टम् । द्युकाम इति । यद्यपि वत्वंहल्त्वाद्यपेक्षया विशेषधर्मस्तथाप्येतद्वाक्योपप्लुते वकारवदुकार इति वाक्ये उपात्तधर्मापेक्षया न तस्य तत्त्वम्, सूत्रक्लृप्तस्थान्यादेशभावमादायैवैतत्कृतवाक्योपप्लवादिति भावः ।

क इष्ट इति । यद्यपीदं रूपमुत्वे गुणेऽवादेशे च पाक्षिकलोपेन सिध्यति, तथापि पक्षे कविष्ट इति स्यात्; कयिष्ट इति चेष्यते इति भावः । स्थान्यवयव एवेति । उपलक्षणमेतत्स्था निरूपोऽपीति बोद्धव्यम् । अत एव "आदेशिन्यल्याश्रीयमाणे प्रतिषेध" इति भाष्ये उक्तम् ।

---

तत्त्वाऽऽदर्शः

अनल्विधाविति किमिति । अत्र सूत्रे विधिग्रहणं किमर्थम्, अनलः, अनलि, वा उक्तेऽपि 'द्युकामः' 'क इष्टः' इत्यादौ अलि परत्वात् निषेधसिद्धेः, इतिचेदत्रोच्यते—सप्तम्यन्त पञ्चम्यन्त तृतीयान्त षष्ठ्यन्तविभक्तिभिः सह समासो भवतीति बोधनाय विधिग्रहणं कर्तव्यम् ।

वस्तुतस्तु—विवक्षया सर्वाभिः विभक्तिभिः सह समासेसिद्धे सूत्रे विधिग्रहणं 'सामान्यातिदेशे विशेषानतिदेश' इति बोधनाय बोध्यम् ।

यद्यपि तत्र अलविधौ, अलः परस्य विधौ, अलोविधौ, अलिविधौ, एतेषामुदाहरणानि मनोरमाकृता क्रमशः स्पष्टतयोद्धृतानीतिकृत्वा तेषां विवरणं नावश्यकम्, तथापि प्रपञ्चार्थंविव्रियते—अलविधौ-व्यूढोरस्केन, अत्र सकारस्य स्थानिवत्वेन विसर्गवदट्त्वमाश्रित्य 'अड्व्यवाये' इति णत्वं प्राप्तं निषिध्यते । अलःपरस्यविधौ-द्यौः, पन्थाः, अत्र स्थानिवत्वेन प्राप्तहल्ङ्यादिलोपो न । अलोविधौ—'द्युकामः,

तत्त्वाऽऽदर्शः

अत्र वलिलोपो न । अलिविधौ—'क इष्टः', अत्र 'हशिचे'त्युत्वं न। यद्यपि इदंरूपमुत्वे गुणेऽवादेशे पाक्षिकलोपेन च सिद्ध्यति, तथापि पक्षे कविष्ट इति स्यात्, कयिष्ट इतिचेष्यते, इति बोध्यम् ।

स्थान्यवयवएवेति । आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधौ इति सूत्रार्थः । अल्वृत्तिधर्मनिमित्तके विधौ न स्थानिवत् इति यावत् ।

नन्वेवं 'रामाये'त्यादौ 'सुपिचेति' दीर्घो न स्यात्, यतो हि—अल्वृत्तिधर्मो यञ्त्वरूपोधर्म स्तन्निमित्तके विधौ 'सुपिचे'तिदीर्घविधौ स्थानिवत्वनिषेधात्, इतिचेन्न, अत्र प्रत्यासत्त्या स्थान्यवयवाल् गृह्यते, तेन स्थान्यवयवाल्वृत्तिधर्मनिमित्तके विधौ न स्थानिवत् इत्यर्थेन यञ्त्वस्य स्थान्यवयवाल्वृत्तित्वाभावेनादोशात् ।

नचैवमपि स्थानी ङे इति तदवयवाल् ए इति तद्वृत्तिधर्मः सुप्त्वम्, तन्निमित्तकविधिः सुपिचेतिदीर्घविधिस्तत्कर्तव्ये स्थानिवत्वनिषेधेन दोषतादवस्थ्यमेवेति वाच्यम्, अल्मात्रवृत्तिधर्मनिमित्तके विधौ इत्यर्थकरणेनादोषात् । सुप्त्वस्य भ्यामादावपि सत्वेनाल्मात्रवृत्तित्वाभावात् ।

नचैवं प्रपठ्येत्यत्र वलादिलक्षणइट्स्यात् वलाद्यार्धधातुकत्वस्याल्मात्रवृत्तित्वाभावेन स्थानिवत्वनिषेधाभावादितिवाच्यम्, स्थान्यवयवाल्वृत्ति अल्मात्रवृत्तिधर्मघटितधर्मनिमित्तके विधौ न स्थानिवदिति सूत्रार्थकरणेनादोषात् ।

नच वभूवियेत्यत्रेण् न स्यादिति वाच्यम्, धर्मे आदेशावयवाल्वृत्तित्वविवक्षणेन थकारे वल्त्वस्य सत्वेन निषेधाभावात् ।

नचैवमपि 'वभूवतु'रित्यत्रेट्स्यात्, अल् मात्रवृत्तिधर्मस्य वल्त्वस्य आदेशावयवसकारवृत्तित्वेनानल्विधाविति निषेधाप्रवृत्या स्थानिवत्वेन वलाद्यार्धधातुकत्वानिदेशादितिवाच्यम्, अल्मात्रवृत्तिधर्मे आदेशावयवाल्वृत्तित्वनिवेशेन वल्त्वस्य अकाररूपे आदेशाद्यल्वृत्तित्वाभावेनादोषात् ।

नच "कः" "पन्थाः" इत्यादौ हल्न्तत्वातिदेशेन 'हल्ङ्याविति' सुलोपापत्तिरितिवाच्यम्, अतिदिश्यमानो योऽल्मात्रवृत्तिधर्मघटितधर्मस्तन्निमित्तकेविधौ न स्थानिवत्, इति सूत्रार्थकरणेनादोषादिति प्राचीनाः ।

तत्त्वाऽऽदर्शः

अत्र नव्याः—अनल्विधावित्यस्य पूर्वोक्तार्थस्वीकारे धिन्वन्ती'त्यत्र आर्द्धधातुकत्वस्यालमात्रवृत्तित्वाभावेनानल्विधाविति निषेधाप्राप्त्या स्थानिवत्वेनार्धधातुकत्वातिदेशात् वलादित्वस्य स्वतःसिद्धत्वाचेट् स्यात्।

किञ्च 'भो भगो अघो' इति सूत्रस्थ भाष्यविरोधश्च स्यात्। तत्र हि—सूत्रेऽश् ग्रहणाभावे 'वृक्षस्तत्र' 'प्लक्षस्तत्रे'त्यत्र यत्वापत्तिरूपन्दोषमुक्त्वा यत्वस्यासिद्धत्वेन विसर्गे कृते दोषं परिहृत्य पुनरपि स्थानिवत्वेन रुत्वाद्यत्वमाशङ्क्य अनल्विधाविति निषेधेन समाहितम्, पूर्वोक्तार्थस्वीकारेतु—रुत्वस्यालमात्रवृत्तित्वाभावेन निषेधाप्रवृत्त्या भाष्यविरोधः स्पष्ट एव। अतः स्थानिरूपाल्वृत्तिधर्मनिमित्तके विधौ न स्थानिवत् इति सूत्रार्थोऽपि स्वीकार्यः, एवञ्च उक्तस्थाने आर्धधातुकत्वस्य, रुत्वस्य च अल्वृत्तित्वसत्वेन न धिन्वन्तीत्यत्र दोषः, नापिच 'भो भगो' इति भाष्य विरोध इत्याहुः।

नचैतन्मते रामायेत्यत्र दोषः, आदेशो य इति, तस्य स्थानी 'ए' इति तद्वृत्तिधर्मः सुप्त्वम्, तन्निमित्तके दीर्घविधौ स्थानिवत्वनिषेधादिति वाच्यम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमि[illegible]के विधौ न स्थानिवत्, स्थानिसम्बन्ध्यल्वृत्ति अल्मात्रवृत्तिधर्मघटितधर्मनिमित्तके विधौ च न स्थानिवत्, इत्यर्थकरणेन रामायेत्यत्र स्थानितावच्छेदकस्य ङेत्वस्याल्त्वव्याप्यधर्माभावात्। धिन्वन्तीत्यत्र च अल्त्वव्याप्योधर्म इकुत्वम्, तद्धर्मावच्छिन्नास्थानिता उकारनिष्ठा, तन्निरूपितादेशताश्रयोवकारः, तद्धर्मिकारोपः, वकारः आर्धधातुकत्ववान् भवतु, तदारोपप्रकारीभूतोधर्मं आर्धधातुकत्वं, तन्निमित्तकइड्विधिः तत्कर्तव्ये न स्थानिवत्वम्। नचैवमपि 'अतिखट्वः' 'निष्कौशाम्बि' रित्यत्र सुलोपाभावाय हल्ङ्याब्भ्यिति सूत्रे कृतस्य दीर्घग्रहणस्य, 'ङ्याब्ग्रहणेऽदीर्घ' इति वार्तिकस्य, तत्प्रत्याख्यानपर 'आ-आप्, ङी-ई इति प्रश्लेषपरभाष्यस्य च विरोधः, तत्र हि—'गोस्त्रियो' रिति सूत्रे 'अचश्चे'ति परिभाषोपस्थित्या अल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिको य आरोपः, ह्रस्वः आप्त्ववान् भवतु, ह्रस्वः ङीप्त्ववान् भवतु, इत्याकारकस्तत्प्रकारीभूतआप्त्वङीप्त्वनिमित्तकत्वात् हल्ङ्यादिलोपस्य तत्र कर्तव्ये स्थानिवत्वनिषेधस्य सिद्धत्वात्, दीर्घग्रहणस्य 'ङ्याब्ग्रहणेऽदीर्घः'इतिवार्तिकस्य, आ-आब्निति प्रश्लेषस्यचोपयोगाभावादिति वाच्यम्, स्थानितायां साक्षात्पदनिवेशेनादोषात्—

तद्विधौ हि यञ्जादित्वमाश्रितं यञ्जादेशावयवो न तु स्थान्यवयव इति तदेतत्सकलमभिप्रेत्याह—न तु स्थान्यलाश्रय इति। आश्रयणं चेह यथाकथञ्चिन्न तु प्राधान्येनैवेत्याग्रहः। तेन प्रपठथेत्यत्र वलादिलक्षण इण् न। तन्निषेधादिति। स्थानिवत्त्वनिषेधादित्यर्थः॥

---

शब्दरत्न

न तु स्थान्यवयव इति। अतः प्रत्ययत्वं स्थानिवत्त्वेन भवत्येवेति भावः। अग्रहीदित्यादौ "ग्रहोऽलिटि" (पा० सू० ७।२।३७) इत्यनेनेट एव दीर्घविधानान्नाल्त्वेन तस्य स्थानितेतितद्वृत्तोट्त्वाश्रयस्य सिचो लोपस्यसिद्धिरिति बोध्यम्। यथाकथंचिदिति। व्याख्यानादिति भावः॥

---

तत्त्वाऽऽदर्शः

अयंभावः—'गोस्त्रियो'रिति सूत्रे निर्दिश्यमानपरिभाषोपस्थित्या अजन्तस्त्रीप्रत्ययावयवस्य निर्दिश्यमानस्य ह्रस्व इत्यर्थेन, निर्दिश्यमानत्वावच्छिन्ना स्थानिता, इतिनिर्दिश्यमानत्वस्य अल्त्वव्याप्यधर्माभावेन अनल्विधाविति निषेधाप्रवृत्त्या स्थानिवत्त्वेन आपः सत्वात् प्राप्तसुलोपवारणार्थं सूत्रे दीर्घग्रहण-वार्तिक-भाष्यादीनाञ्चावश्यकत्वमेवेति बोध्यम्।

साक्षात्पदनिवेशादेव 'आधये' 'चिकीर्षवे' 'नगरकारेभ्यः' 'कुम्भकारेभ्यः,' इत्यादौ 'घेर्ङिति' 'बहुवचनेझल्येत्' इत्यत्रालोन्त्यस्येत्यस्योपस्थित्या स्वस्यापि स्वव्याप्यत्वमिति स्वीकारात्, अल्त्वव्याप्यालत्वावच्छिन्नस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतकृत्त्वनिमित्तकत्वेन अव्ययसंज्ञाया अनल्विधाविति निषेधात्, 'अनिकारोकारप्रकृति'रिति वार्तिकस्य, सन्निपातपरिभाषया तत्प्रत्याख्यानस्यचासङ्गत्यापत्तिर्न।

नन्वैवमपि 'लोम्नीअत्र' 'साम्नीअत्रे'त्यत्र अनल्विधाविति निषेधेन ईकारे द्विवचनत्वाभावेन 'ईदूदेद्द्विवचनंप्रगृह्यम्' इत्यनेन प्रगृह्यसंज्ञा न स्यादिति वाच्यम्, 'नपुंसकाच्चे'त्यत्र तस्मादितिपरिभाषोपस्थाप्यं विशेष्यम्, 'औङ' इति विशेषणमिति स्वीकारेण अल्त्वव्याप्यौङ्त्वधर्मेण 'नपुंसकाच्चे'ति शास्त्रीयस्थानितायाः साक्षादनवच्छिन्नत्वेनादोषात्। 'रमायाम्' इत्यादौ याडर्थे स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नेति निवेशनीयम्।

"अचः" (पा० सू० १।१।५७)। अल्विध्यर्थमिति। तेन वव्रश्चे-

---

तत्त्वाऽऽदर्शः

परेतु—स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नेति निवेशो व्यर्थ एव, सूत्रस्य अल्पर्याप्तस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके विधौ न स्थानिवत् इत्येवार्थः। बोधकावयवेषु अनुबन्धेषु बोध्यावयवत्वमारोप्यते, इति 'एकान्ताअनुबन्धा' इत्यस्य तात्पर्येण 'रमायाम्'इत्यादौ ङकार—इकार—उभयपर्याप्तत्वेन स्थानिताया अल्पर्याप्तत्वाभावादित्याहुः।

वस्तुतस्तु—नवीनसम्मतार्थस्वीकारे गौरवात् प्राचीनमतमेव युक्ततमम्, 'धिन्वन्ती'त्यत्र पञ्चमीसमासेन इडमावसिद्धेः।

नच स्वविधौ स्थानिवत्वाय पञ्चमीसमासस्यानङ्गीकारएवेति वाच्यम्, आगमेतर स्वविधौ पञ्चमीसमासस्यानङ्गीकृतत्वेन इडागमे कर्तव्ये बाधकाभावात्।

'भो भगो' इति सूत्रे च 'रोरि' इति सूत्रात् रपदमनुवर्त्य रोः रेफस्य यत्वं भवति इति सूत्रार्थेनाल्विधित्वात् नापि भाष्यविरोधः।

नच प्राचांमते 'याश्विः' इत्यत्र स्थानिवद्भावेन पदान्तत्वमादाय ऐजापत्तिरिति वाच्यम्, 'ऐयाश्वि'रित्यस्यैवेष्टत्वात्।

नव्यमतेऽपि 'नय्वाभ्या'मित्येतच्छास्त्रीयोद्देश्यतायाः पूर्वत्वधर्मेण साक्षादवच्छिन्नत्वेन, आरोपप्रकारीभूतपदान्तत्वधर्मेण साक्षादवच्छिन्नत्वाभावेन निषेधाप्राप्त्या 'ऐयाश्वि'रिति प्रयोगस्यैव सम्मतत्वात्।

अल्विध्यर्थमिति। अचः परस्मिन् पूर्वविधौ। परनिमित्तोऽजादेशः स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये इति सूत्रार्थः।

सूत्रमिदमल्विध्यर्थम्, अतएव 'वव्रश्चे'त्यत्र वस्य संप्रसारणं न, यतो हि 'उरत्' इति सूत्रेऽङ्गेन प्रत्ययाक्षेपात् उरदत्वस्य परनिमित्तकत्वेन स्थानिवत्वात् सम्प्रसारणत्वेन 'नसम्प्रसारणेसम्प्रसारणम्' इत्यनेन तन्निषेधात्।

नच 'नसम्प्रसारणे' इति सूत्रस्थ सम्प्रसारणशब्दस्य सम्प्रसारणभाविनिलक्षणामाश्रित्यसम्प्रसारणप्रवृत्तिप्राक्कालएवप्रतिषेधे, निषेधसामर्थ्याच्च परस्य सम्प्रसारणे कृते पूर्वस्य न सम्प्रसारणापत्तिरिति सूत्रस्य फलाभावान्निष्फलमिदमिति वाच्यम्;

त्यत्र वस्य सम्प्रसारणं न। उरदत्त्वस्य स्थानिवत्त्वेन सम्प्रसारणतया "न सम्प्रसारण—" ( पा० सू० ६।१।३७ ) इति निषेधात्। न चोरदत्वं परनिमित्तं नेति वाच्यम्, अङ्गाक्षिप्ते प्रत्यये परे तद्विधानात् 'प्रागभ्यासविकारेभ्योऽङ्गाधिकारः' इति पक्षं दूषयित्वा 'आसप्तमसमाप्तेः' इति पक्षस्यैव आकरे सिद्धान्तितत्वात्। किं च पूर्वसूत्रेण स्थानिप्रयुक्तमतिदिश्यते, नत्वादेशप्रयुक्तं वार्यते। नायकः, पावक इत्यादौ "एचोऽयवायावः" ( पा० सू० ६।१।७८ ) इत्यादीनामप्रवृत्तिप्रसङ्गात्। अनेन तु वार्यते। शब्दाधिकारमाश्रित्य भावा-

---

शब्दरत्न

दूषयित्वेति। "अङ्गस्य" ( पा० सू० ६।४।१ ) इति सूत्रे भाष्ये इति शेषः। एतदसिध्यैव दूषयित्वेत्यर्थः। विस्तरस्त्वन्यत्र द्रष्टव्यः। अनेन तु वार्यत इति। स्थानिनि सति यद्भवति तदादेशेऽपि भवति तत्र सति यन्न भवति तदादेशेऽपि न भवतीत्यर्थात्। अजादेशोऽच्कार्यं लभते न लभते चेति वाच्योऽर्थः, तत्रोपपत्तिमाह—शब्देति। पूर्वसूत्रे स्थानिवत्पदस्य तद्वत्कार्यं लभत इत्येतन्मात्रार्थकस्येहोभयार्थकत्वा-

---

तत्त्वाऽऽदर्शः

स्थानिनि सति यद् भवति तदादेशेऽपि भवति, तत्रसति यन्न भवति तदादेशेऽपि न भवति, इत्यर्थेन आदेशप्रयुक्तमपि वार्यते अनेन, इति वैलक्षण्याय सूत्रस्यावश्यकत्वात्। नचैवं देवयतेः क्विपि णिलोपे च कृते 'च्छोः' इत्यूठि एकारस्यायादेशे 'दयुः' इति रूपं भवति, तच्च न भविष्यति, स्थानिनि णिचि अभवतोऽयादेशस्य णिलोपेऽप्यभावातिदेशप्रसङ्गात् इतिवाच्यम्, आदेशो स्थानिवृत्तिधर्मसंभावनायां यद् भवति तद् भवति, यन्न भवति तन्न भवति इत्यर्थेन, प्रकृते णिलोपे णित्वसंभावनायामपि क्विब्निमित्तकोठोजातत्वेन तन्निमित्तकायादेशस्य प्राप्तिसत्वेन तत्प्रवृत्तौ बाधकाभावात्।

अतएव प्रकृतसूत्रस्थम् 'परस्मिन्निति'किम्? 'युवजानिः' नैतदस्तिप्रयोजनम्, न्यादेशघटकं नकारमादाय लोपो भविष्यति, इतिभाष्यं सङ्गच्छते।

नचैवमपि 'एषोगमयती'त्यत्र सुलोपापत्तिरिति वाच्यम्,स्थानी न निवृत्तः आदेशो न जात इति सम्भावनायां यद्भवति तद्भवति, यन्न भवति तन्न भवतीत्यर्थाश्रयेणादोषात्।

केचित्तु—'एषोगमयती'त्यत्र सुलोपस्येष्टत्वमेव, अतएव 'एषयूनःपश्ये' त्यत्र 'नसम्प्रसारण'इति सूत्रसत्वे, 'सम्प्रसारणादसम्प्रसारणे'इतिकल्पे च न फलभेद इत्याहुः।

भावयोरुभयोरप्यतिदेशोऽयमिति स्वीकारात्। "न पदान्त" (पा० सू० १।१।५८) इति सूत्रे यलोपदीर्घादिग्रहणं चेह लिङ्गम्। अत एव गणयतीत्यादौ न वृद्धिः, स्थानिनि सत्यभवन्त्यास्तस्या आदेशे ऽप्यभावातिदेशात्। उक्तं च "काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति" इति।

---

शब्दरत्न

त्तदाश्रयणमिति भावः। यलोपदीर्घादिति। यलोपदीर्घादी येषामित्यर्थः। यलोपादयो दीर्घादयश्चेति यावत्, तेन स्वरादीनामपि सङ्ग्रहः। यलोपादीत्येव सिद्धे एवमुक्तिर्वैचित्र्याय। न हि यलोपादिविषये भावातिदेशप्रसक्तिरिति भावः। न वृद्धिरिति। "अत उपधायाः" (पा० सू० ७।२।११६) इति वृद्धिर्नेत्यर्थः। "क्लिलुगुपधात्व"—(वा०) इति निषेधस्तूपधात्वनिमित्तकप्रत्ययविधावेव नान्यत्रेति भाष्ये स्पष्टम्।

---

तत्त्वाऽऽदर्शः

अयं भावः—अत्र सूत्रे शब्दाधिकारमाश्रित्य भावाभावयोः उभयोरप्यतिदेशो भवति, तत्र भावोदाहरणम्, 'निगाल्यते' अभावोदाहरणम्—'पटयति', 'गणयतीत्यादि। स्थानिनिसत्यभवन्त्यास्तस्या आदेशेऽप्यभावातिदेशात्। मानञ्चात्र—'न पदान्त' सूत्रे यलोपदीर्घादिग्रहणम्। नच गणयतीत्यादौ 'क्लिलुगुपधात्वचङ्परणिह्रास कुत्वेषूपसंख्यानम्' इति स्थानिवत्त्वनिषेधवार्तिकेन स्थानिवत्त्वाभावात् वृद्धिप्राप्तिरितिवाच्यम्, स निषेधस्तु—वार्तिके चङ्परणिह्रासस्य पृथक् पाठात् उपधात्व निमित्तक प्रत्ययविधावेव भवतीति स्वीकारात्।

अतएव भवार्थेऽण् प्रत्यय निष्पन्न पारिखशब्दात् 'वृद्धादकेकान्त खोपधात्' इति सूत्रेण छ प्रत्यये कर्तव्येऽण् प्रत्यये परतः जातस्याकारलोपस्य न स्थानिवत्वम्।

अत्र पूर्वसूत्रात् आदेशग्रहणमनुवर्तते, तदनुरोधात् अच इति स्थान षष्ठी, एवञ्च यत्राच एव आदेश स्तत्रैवानेन स्थानिवत्वम्। यथा 'निगाल्यते' 'पटयती' त्यादि। मानञ्चात्र—'भूसुवोस्तिङि' इति सूत्रम्, गुणाभावाय तत्, यदि च उभयोरपि स्थानिवत्वं स्यात्, तदा सिचोऽपि स्थानिवत्वेन सिज्निमित्तको गुणः स्यादेव। अतएव सूत्रेऽच इति चरितार्थम्, अन्यथा यायावर इत्यादौ यलोपस्य स्थानिवत्वेनैव 'आतोलोपइटिचे'त्यनेन लोपानापत्त्या 'न पदान्त' सूत्रे वरेग्रहण वैयर्थ्येन हलादेशो न स्थानिवत् इति कल्पनेन तद्वैयर्थ्यं स्यात्।

स्यादेतत्, पूर्वत्वस्य सावधित्वेन सन्निहितस्यैव अवधित्वमुचितम्। सन्निहितं चेह त्रयं, स्थानी, आदेशो, निमित्तं च। तत्र न तावत्स्थानी अवधिस्तस्यादेशेनापहारात्। नाप्यादेशनिमित्ते, वैयाकरण इत्यत्र ऐकारस्यायादेशापत्तेरित्याशङ्क्याह—अचः पूर्वत्वेन दृष्टस्येति। पूर्वत्वमुपलक्षणं, न तु विशेषणमिति भावः। एतेन "अचः पूर्वत्वविज्ञानादैचोः सिद्धम्" इति वार्तिकं व्याख्यातम् ॥

---

शब्दरत्न

अयादेशापत्तेरिति। यणः स्थानिवत्त्वेनाच्त्वादिति भावः। पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणं स्वरे निषेधात्। अतो यण्निमित्ताकारापेक्षयाऽप्यैकारस्य पूर्वत्वमस्तीति तत्पक्षेऽप्ययं दोष इति भावः। आदेशेनापहारात्कथं स्थानिनोऽवधित्वमित्यत आह—उपलक्षणमिति ॥

---

तत्त्वाऽऽदर्शः

नच 'पेस्वर' इत्यत्र गुणार्थमतोलोपस्य स्थानिवत्वाभावाय सूत्रे वरेग्रहणमावश्यकमिति वाच्यम्, 'धिन्विकृण्व्योरचे'ति सूत्रे वलोपेनैवसिद्धेऽकारविधानेन हलादेशो न स्थानिवत् इति कल्पनेन वैयर्थ्यस्य युक्तत्वात्। एवञ्च अजादेश एव स्थानिवदित्यर्थकल्पनेन मरुतमाचष्टे 'मारयती'त्यादौ वृद्धिः।

सूत्रेऽज्ग्रहणम्, 'आगत्ये'त्यत्र तुगर्थंकर्तव्यम्, अन्यथा मलोपस्य स्थानिवत्वेन ह्रस्वान्तत्वाभावात् 'ह्रस्वस्य पिति कृति तुक्' इति सूत्रेण तुग्नस्यात्।

वस्तुतस्तु-'वैभिदिब्राह्मणकुलानि' इत्यत्र नुमापत्तिवारणायाज्ग्रहणं कर्तव्यम्। परस्मिन्निति किम्? 'युवजानिः' अत्र निङः स्थानिवत्वेन यलोपो न स्यात्।

पूर्वविधाविति किम्? 'नैधेयः' अत्र निपूर्वकात् धा धातोः कि प्रत्यये आतोलोपे ढकि रूपं भवति, परम्—आतोलोपस्य स्थानिवत्वात् 'उत्तरासंख्यापूर्वा संख्यां बाधते', इति भाष्यात् अच्त्वव्यपदेशविरोधात् स्वाश्रय द्व्यच्त्वनिवृत्तौ ढक् प्रत्ययो न स्यादिति बोध्यम्।

"न पदान्त" ( पा० सू० १।१।५८ )। पदस्य चरमावयव इति। वृक्षं वेतीति वृक्षवीः। वातीति वृक्षवाः। तमाचष्टे वृक्षव्। विच्। इह "लोपो व्योः—" (पा० सू० ६।१।६६) इति वलोपो न। स्थानिवत्त्वात्। न च "न पदान्त—" ( पा० सू० १।१।५८ ) इति निषेधः। इह विधेयस्य लोपस्य पदानवयवत्वात्। पदान्तस्य स्थाने विधौ नेति व्याख्याने तु नेदं सिध्येत्। "सुबन्ताण्णिच्" इति हरदत्तादिमते ऽन्तर्वर्तिसुपा पदत्वात्। न च "इष्ठ

---

### शब्दरत्न

अन्तःशब्दस्य चरमावयववाचित्वं विधिशब्दो भावसाधनः कर्मषष्ठ्या समासेन पदचरमावयवे कर्त्तव्ये इत्येवं व्याख्याने फलमाह—वृक्षमिति। विजिति। क्विपि तूठस्यादिति भावः। स्थानिवत्वादिति। णिलोपस्य टिलोपस्य वा स्थानिवत्त्वादित्यर्थः।

---

### तत्त्वाऽऽदर्शः

विधिशब्दोभावसाधन इति। अत्र सूत्रे पदान्तादीनां चरन्तानां पदानां द्वन्द्व समासः। ततः "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायेन विधि पदार्थं सर्वेषामन्वयः। विधिशब्दश्च भावसाधनः, विधानं विधिः, भावे किः प्रत्ययः। पदान्त इत्यत्रान्तशब्दश्चरमावयववाची। एवञ्च पदचरमावयवादिकार्यकर्मकविधाने कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्, इति सूत्रार्थः।

अतएव वृक्षं वेति, वातीति वा वृक्षवाः, तमाचष्टे इति वृक्षव्, अत्र विच् प्रत्ययः, न क्विप्, तथा सति ऊठो दुर्वारत्वात्। यद्यपि 'यकारवकारान्तानामूठ् भाविनां यङ् लुङ्नास्तीति'च्छ्वोरितिसूत्रे भाष्ये ध्वनतामाचार्याणां मते विच्यपि ऊठः प्राप्तिः सम्भवति, तथापि सिद्धान्ते तदनुवृत्तेरेव स्वीकार इति बोध्यम्। एवञ्च 'वृक्षव्' इत्यत्र 'लोपोव्योर्वलि' इत्यनेन वलोपो न भवति णिलोपस्य टिलोपस्य वा स्थानिवत्वात्। अत्र स्थानिवत्वनिषेधस्य नावसरः, विधेयस्य लोपस्य पदानवयवत्वात्।

कर्मसाधन पक्षे तु—पदान्तस्य स्थाने विधौ नेत्यर्थसत्वेन सुबन्ताण्णिच् इति हरदत्तमतेऽन्तवर्तिसुब्निमित्तकपदत्वस्यैकदेशविकृतन्यायेन वान्ते सत्वेन स्थानिवत्व निषेधाल्लोपापत्तिः स्यात्। नच 'प्रातिपदिकाद्धात्वर्थेबहुलमिष्ठवच्चे'ति णिचि भत्वाति देशेन पदत्वाभावान्न दोषावसर इति वाच्यम्, णेर्लुप्तसत्वात्।

वत्" इत्यदिष्टेन णिचि भत्वेन पदत्वबाधो, णेर्लुप्तत्वात्। न च प्रत्ययलक्षणम्, वर्णाश्रयत्वादिति भावः। द्विर्वचनादौ चेति। यलोपादय आदिशब्दग्राह्याः। "वरे" इति तु वरे योऽजादेशः स न स्थानिवदिति व्याख्येयम्।

---

शब्दरत्न

नन्वस्य पदत्वाभावात्कुतो ऽसिद्धिरतआह—सुबन्तादिति। अन्तर्वर्त्तिसुबन्निमित्तकपदत्वस्यैकदेशविकृतन्यायेन वान्ते ऽपि सत्वमिति भावः। प्रत्ययलक्षणमिति। स्थानिवत्त्वेन प्रत्ययनिमित्तं कार्यमित्यर्थः। वर्णाश्रयत्वादिति। "णाविष्ठवद्–" इत्यनेन "यचि भम्" इति शास्त्रस्यैवातिदेशस्तच्च वर्णाश्रयम्, एवं च स्थानिवत्त्वस्याप्रसक्तिः। कार्यातिदेशेऽपि यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापीत्यङ्गीकाराद्वर्णाश्रयत्वाक्षतिः। प्रत्ययलक्षणसूत्रं तु भाष्यकृता प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमार्थत्वेन स्थापितं न त्वप्राधान्येनालाश्रयणे विध्यर्थमिति भावः। न च "अचः परस्मिन्"

---

तत्त्वाऽऽदर्शः

नचात्र प्रत्ययलक्षणसम्भवः, 'वर्णाश्रयेनास्तिप्रत्ययलक्षणमिति' निषेधात्। अतिदेशो द्विविधः, वस्तुतः, रूपातिदेशेत्यादिभेदेन षड्विधः। किन्तु प्रकृते द्विविध इति तात्पर्यम्। शास्त्रातिदेशः, कार्यातिदेशश्चेति। पूर्वकल्पेऽतिदेशेन 'यचिभमि'ति शास्त्रस्यैवातिदेशः, तच्च वर्णाश्रयमिति। अन्त्यकल्पे 'यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापी'ति स्वीकाराद्वर्णाश्रयत्वम्। भाष्यकृतातु—'प्रत्ययलक्षण' सूत्रन्नियमार्थत्वेन वर्णितम्। नियमाकारश्च—'प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैवे'ति। अतएव 'सुद्दषत्प्रासाद' इत्यत्रा'त्वसन्तस्य चाधातो'रिति न दीर्घः। वार्तिककारस्तु—'वर्णाश्रये' इति वार्तिकं प्राधान्येन वर्णाश्रयविधिविषयकम्। सूत्रम्, प्राधान्येनालाश्रयणे विध्यर्थम्। अतएव 'अतृणेट्' इत्यत्रेमागमः, 'मित्रशो'रित्यत्र 'शासइदङ्हलो'रित्यादि सिध्यति, अत्र न स्थानिवद्भावप्रवृत्तिः, अनल्विधाविति निषेधात्। अत्र भाष्यकृन्मतमेव युक्तम्, वार्तिककृन्मते 'सुद्दषत्प्रासाद' इत्यत्र प्रत्ययलक्षणेन दीर्घाभावेऽपि स्थानिवत्वेन तदापत्ते र्दुर्वारत्वात्। मित्रशोः, अतृणेडि'त्यादि सिद्धिप्रकारस्तु, आद्ये 'शासइदङ्हलोरितिसूत्रे

सहविवक्षाऽभावेऽपि निपातनाद् द्वन्द्वः सप्तम्यलुक् च। अथोदाहरणानि, पदान्ते—कानि सन्ति, कौ स्तः। द्विर्वचने—सुद्ध्युपास्यः। वरे—

---

शब्दरत्न

(पा० सू० १।१।५७) इति णिलोपस्य स्थानिवत्त्वेन भत्वं सुलभमिति वाच्यम्। णिलोपस्येव टिलोपस्यापि स्थानिवत्त्वापत्तौ वान्ते भत्वस्य दुर्लभत्वेन तत्र पदत्वानिवृत्तेः। "प्रकल्प्य चापवादविषयम्" इति न्यायेन निषेधविषये तत्प्रतिबन्धाय स्थानिवत्त्वाप्रवृत्तेश्च। हरदत्तादिमते इत्यनेनारुचिर्बोधिता। तद्बीजं त्वयंपक्षो न सूत्रवार्तिकभाष्यसंमत इति प्रातिपदिकात्तदुत्पत्तौ पदत्वाभाव इति। चरमावयवे कार्यं इति व्याख्याने फलं तु एषो यन् हसति इत्यादौ यणः स्थानिवत्त्वाद् "एतत्तदोः" (पा० सू० ६।१।१३२) इति सुलोपाभावः। इणः शतरि यन्निति रूपम्। उत्वे च न स्थानिवद्, अनेन निषेधादिति तत्त्वम्। कानिसन्तीति। वाक्यसंस्कारपक्ष

---

तत्त्वाऽऽदर्शः

'शासइदिति' योगविभागेन सिद्धिः। अन्त्ये, तृणह इम्' इति सूत्रे पितीत्यस्य पित्प्रत्यये परत इत्यर्थकरणेन सिद्धिः, नच तृणहानी त्यत्रदोषः, अत्र सूत्रे 'नाभ्यस्तस्याची'त्यतोऽचीत्यनुवर्त्य वाक्यभेदेन व्याख्यानात्। प्रकृतमनुसरामः, नच सुबन्ताण्णिजितिपक्षस्य मुनित्रयासम्मतत्वेन प्रातिपादिकादेव णिजुत्पत्तौ सुतरां पदत्वाभाव इति नैतत्पक्षे दोष इति वाच्यम्, 'एषोयन्हसती'त्यत्र सुलोपाभावाय यणः स्थानिवत्वस्यावश्यकत्वेन पूर्वोक्तार्थे दोषापत्तेः। भावसाधन पक्षे, लोपस्य पदचरमावयवत्वाभावेन निषेधाप्राप्तौ यणः स्थानिवत्वसिद्धिः। अत्रैवोत्वे च न स्थानिवत्, अनेन निषेधात्।

वस्तुतस्तु—कर्मसाधन विधिशब्दपक्षेऽपि कर्मधारय समास स्वीकारेण पदचरमावयवादिरूपे विधेये कर्तव्ये परपदस्थाजादेशो न स्थानिवदिति सूत्रार्थकरणेन कुत्रापि न दोष इति बोध्यम्।

उदाहरणानीति। पदान्तविधौ—'कानिसन्ति, 'यानिसन्ति' 'कौस्तः', 'तौस्तः' इत्यादि। द्विर्वचने,—सुद्ध्युपास्यः, इत्यादि। वरे, यायावरः। अत्र 'आतोलोप इटिचे'ति सूत्रेणालोपे कर्तव्ये 'अतोलोपः' इति सूत्रविहित यङोऽकारस्य न

यायावरः। "यश्च यङः" इति वरच्। अतो लोपः स च "आतो लोप इटि च" (पा० सू० ६।४।६४) इत्यालोपे कर्तव्ये न स्थानिवत्। यलोपे—यातिः। यातेर्यङन्तात् क्तिच्, अतो लोपः, यलोपः, अल्लोपस्य स्थानिवत्त्वादातो लोपः यलोपः। न च पुनरालोपः शङ्क्यः। चिणोलुङ्न्यायेनातो लोपस्यासिद्धत्वात्स्थानिवद्भावाच्च। स्वरे—चिकीर्षकः, सनोऽतो लोपो "लिति" (पा० सू० ६।१।१९३) इति ककारेकारस्य उदात्तत्वे कर्तव्ये न स्थानिवत्।

---

शब्दरत्न

एतत्। तत्र पक्षे पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तेरिकारादेः स्थानिभूतादचः पूर्वत्वं द्रष्टव्यम्। एतन्मूलकमेव वाक्यसंस्कारपक्षे श्रुतवर्ण क्रमेणैव लक्ष्यसंस्कार इति वदन्ति। न स्थानिवदिति। तेन आतोलोपो नेति भावः। न च पूर्वमलोपस्ततो वलि लोप इति क्रमसत्त्वादकारेणार्द्धधातुकत्वाद्यलाभात्कथमतिदेशेन तल्लाभः। सम्भावनामात्रेणापि तल्लाभस्य वरेग्रहणेन ज्ञापनात्। अस्ति चात्रापि यदि पूर्वं यलोपः स्यात्तदाऽकारेण प्रत्ययत्वं लब्धं स्यादिति सम्भावना। फलं तु यातिरित्यादिसिद्धिरिति दिक्। क्तिजिति। "क्तिच्क्तौ च संज्ञायाम्" (पा० सू० ३।३।१७४) इत्यनेन, क्तिन् तु न, "अप्रत्ययात्" (पा० सू० ३।३।१०२) इत्यनेन बाधात्। न स्थानिवदिति। स्थानिवत्त्वे हि स्वराप्रवृत्तिरेव स्यात्। अकारस्य तु न, स्वविधौ स्थानिवत्त्वनिषेधात्। लित्त्वं तु कारक इत्यादौ सावकाशमिति भावः।

---

तत्त्वाऽऽदर्शः

स्थानिवत्। यलोपे कर्तव्ये च यलोपविधौ स्थानिवद्भावनिषेध इति बोध्यम्। नच यकारसमुदाये प्रत्ययत्वसत्त्वेन केवलाकारे तदभावेन स्थानिवद्भावेन अजादिङिन्निमित्तप्रत्ययत्वाभावेन 'आतोलोपइटिचे'त्यस्याप्राप्त्या वरे परतः यायावर इत्युदाहरणं समीचीनमिति वाच्यम्, स्थानिवत्वेन सम्भावितधर्मस्यापि स्थानिवद्भावेन लाभो भवतीत्यर्थस्य वरेग्रहणेन बोधनात्। अतएव च यलोपे—'यातिः'—इति उदाहरणं संगच्छते। तथाहि—यङन्तात् 'या' धातोः क्तिचि यायाय्–ति–इतिस्थिते 'अलोपे' यलोपे याया-ति इति स्थिते अतोलोपस्य स्थानिवत्वेनाजादिङित्प्रत्ययत्वमादाय आतोलोपे याय्-ति-इतिस्थिते यलोपे 'यातिः' इति रूपं सिध्यति। यदि संभावितधर्मस्य स्थानिवद्भावेन लाभो न स्यात्, तर्हि पूर्ववत् यकारसमुदाये प्रत्य-

सवर्णानुस्वारयोः—शिण्ढि । दीर्घे—प्रतिदीव्ना । जशि—सग्धिश्च मे ।

शब्दरत्न

शिण्ढीति । नन्वत्रानुस्वारस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वाप्रवृत्तिः । नचास्मादेव ज्ञापकात्तस्याशास्त्रीयत्वेऽपि स्थानिवत्त्वेन तत्त्वम् । फलाभावात् । तद्घटितसन्निवेशापेक्षस्य ततः पूर्वत्वस्यातिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वाच्च । "भोभगो" (पा० सू० ८।३।१७) इति सूत्रस्थभाष्यरीत्या तस्य स्थानिभूताल्वृत्तिधर्मत्वेन "अनल्विधौ" इति निषेधाच्च । विशेषणतया ऽलाश्रयणाच्च । भाष्ये—"पूर्वत्रासिद्धे" इत्यवष्टम्य वरे—यलोप—स्वर—भिन्नानां द्विर्वचनादीनां ग्रहणस्यात्र प्रत्याख्यानेन तस्य च णत्वे प्रतिप्रसवेनात्र स्थानिवत्त्वेन परसवर्णाभावस्यैव लाभादिदमुदाहरणं चिन्त्यम् । णत्वग्रहणे च प्रतिप्रसववार्तिके लक्षणप्रतिपदोक्तपरिभाषा नेत्युपपादयिष्यते ।

तत्त्वाऽऽदर्शः

यत्वसत्वेन अकारे तदभावेन आलोपाप्राप्त्या यलोपप्राप्त्यसंभवेनोदाहरणासङ्गतिः स्पष्टैव । स्वरे—'चिकीर्षकः' । ईकारस्य 'लिति' इति सूत्रेणोदात्तत्वे कर्तव्ये सनोऽतोलोपो न स्थानिवत् । नच सूत्रारम्भसामर्थ्याद्भविष्यतीति वाच्यम्, कारकः, हारकः, इत्यादौ तस्य सावकाशत्वात् ।

सवर्णानुस्वारयोः—'शिण्ढी'त्युदाहरणम्, अत्र 'श्नसोरल्लोप' इति सूत्रविहिताल्लोपो न स्थानिवत् । रौधादिके 'शिष्लृ विशेषणे' इति धातोः लोटि मध्यमपुरुषैकवचने सिपि तत्स्थाने 'सेर्ह्यपिच्चे'त्यनेन ह्यादेशे 'हुझल्भ्योहेर्धिः' इत्यनेन धि आदेशे 'रुधादिभ्यःश्नम्' इति श्नमि अल्लोपे अनुस्वारे ष्टुत्वपरसवर्णेषु 'झरोझरि सवर्णे' इत्यनेन वा डकारलोपे शिण्ढीति रूपम्भवति । ननु अत्र श्नमोऽकारलोपे नस्यानुस्वारे नकारस्य ततःपूर्वत्वेन दृष्टत्वात् प्राप्तस्थानिवत्वस्यानुस्वारे कर्तव्ये निषेधोपयोगेऽपि परसवर्णे कर्तव्ये ऽनुस्वारस्याचःपूर्वत्वेनादृष्टत्वात् स्थानिवत्वाप्रवृत्तौ सवर्णे निषेधस्योदाहरणं न युक्त मितिचेन्न, परसवर्णे कर्त्तव्येऽचःपूर्वत्वरूपं धर्ममादाय स्थानिवत्सूत्रेण,अलोपस्याचःपरस्मिन्निति स्थानिवत्वनिषेधाय,सवर्णग्रहणस्य सार्थक्यात् । नचाचःपूर्वत्वस्याशास्त्रीयत्वेनातिदेशासम्भव इति वाच्यम्, सवर्णग्रहणसामर्थ्यादशास्त्रीयस्यापिधर्मस्यातिदेशसम्भवात् ।

शब्दरत्न

किं च "दीर्घादाचार्याम्" (पा०सू० ८।४।५२) इत्युत्तरम् "अनुस्वारस्य ययि" (पा० सू०८।४।५८) "वा पदान्तस्य" (पा० सू० ८।४।५२), "तोर्लि" ( पा० सू० ८।४।६०) "उदःस्था" (पा० सू० ८।४।६१) "झयो हो–" (पा० सू० ८।४।६२) "झरछोऽटि" (पा०सू०८।४।५४) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" (पा० सू० ८।४।५३ ) "अभ्यासे चर्च" ( पा० सू० ८।४।५४ ) "खरि च" ( पा० सू० ८।४।५५) "वा ऽवसाने" ( पा० सू० ८।४।५५ ) "अणोऽप्रगृह्यस्य" ( पा० सू० ८।४।५७) इति, पञ्चसूत्र्याः पाठ इति भाष्यसम्मताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या "झलां जश् झशि" ( पा० सू० ८।४।५३ ) इत्यस्य "झरो झरि" ( पा० सू० ८।४।६५) इत्यस्य चासिद्धत्वेन यर्परत्वाभावात्तदप्राप्तेरिति चेत्, सत्यम्। पादयतेः क्विपि पाद्धसतीत्यादौ "झयो ह–" इति पूर्वसवर्णे पञ्चमीसमासेन प्राप्तस्थानिवद्भाव-वारणार्थत्वात्। हरितशब्दादाचक्षाणण्यन्तात् क्विपि हरिद्धसती त्यादौ उक्तरीत्या प्राप्तस्य तस्य वारणार्थत्वाच्च। अत्राल्लोपस्यापि तत्प्राप्तया क्वौ लुप्तमित्यस्य विषय एव न। हरिन्नमती त्यादौ अनुनासिके तद्व्यावृत्त्यर्थत्वाच्च। "हयवरट्" सूत्रभाष्यरीत्या

---

तत्त्वाऽऽदर्शः

नच फलाभाव इति वाच्यम्, प्रपूर्वकात् ण्यन्तात् 'अद्' धातोः क्त्वो ल्यबादेशे 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यःपूर्वविप्रतिषेधेन' इति वार्तिकेन वृद्धेः प्राक् णेर्लोपे ततःप्रत्ययलक्षणेनोक्तरीत्या स्थानिवत्त्वेनाचःपूर्वत्वमादाय 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावात् णिचाव्यवधानेन 'अदोजग्धिर्ल्यप्तिकिति' इति जग्ध्यादेशा-प्रवृत्तौ 'प्राद्ये'त्यादि सिद्धिरूपफलसम्भवात्। नच अकारयुक्तो नकार इत्येवानुपूर्वी-घटितसन्निवेशापेक्षस्य ततःपूर्वत्वस्यातिदेष्टुमशक्यत्वेन फलाभावएवेति वाच्यम्, आदेशे स्थानिवृत्तिधर्मस्यैवातिदेश इति तादृशधर्मानयनेऽपि अदोषात्। नच अल्त्वव्याप्यधर्मावच्छिन्न स्थानितानिरूपितादेशताश्रय धर्मिकारोपप्रकारीभूतधर्मा-वच्छिन्नोद्देश्यताके विधौ न स्थानिवत्, इति 'भोभगो' इति सूत्रसंमतार्थेनानुस्वार-स्थ निनो नकारस्य तत्वेन स्थानिवत्वाप्रवृत्तिरिति वाच्यम्, यत्रारोप्यमाणधर्मेण साक्षा-दवच्छिन्नोद्देश्यता तत्रैव तन्निषेधप्रवृत्त्या प्रकृतेऽतथात्वेनादोषात्। नचाल्त्वस्या-ल्त्वव्याप्यधर्मत्वेन तद्घटिताचःपूर्वत्वस्य सिद्धान्तार्थेऽप्यानयनासम्भव इतिवाच्यम्,

तत्त्वाऽऽदर्शः

यस्यादेशस्य स्थानिवद्भावं चिकीर्षति तत्स्थानिघटकाल्वृत्त्यल्त्वव्याप्यधर्मघटितधर्मानयने एव तन्निषेधप्रवृत्तेः।

नच भाष्ये 'पूर्वत्रासिद्धमित्यवष्टभ्य द्विर्वचनादि'ग्रहणप्रत्याख्यानेन तस्य च णत्वे कर्तव्ये 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु प्रतिषेधः' इति प्रतिप्रसववार्तिकेन निषेधे सति स्थानिवत्त्वेनात्र परसवर्णाभावस्यैवेष्टत्वेननेदमुदाहरणं युक्तमिति वाच्यम्, अस्य लाक्षणिकत्वेन प्रतिप्रसववार्तिकाप्रवृत्तेः।

नच 'अपदान्तस्य मूर्धन्यः' इत्यधिकृत्य 'रषाभ्यां नोणः समानपदे' इति सूत्रस्थ णकारप्रत्याख्यानपरभाष्येण प्रकृते 'प्रतिपदोक्त' परिभाषानाश्रयणमिति वाच्यम्, आरम्भप्रत्याख्यानयोः फलैक्याय प्रतिप्रसववार्तिके परसवर्णनिष्पन्नातिरिक्त णत्वग्रहणेन प्रकृते तदप्रवृत्त्या 'स्थानिवत्त्वनिषेधे णत्वस्येष्टत्वात्। नच भाष्यसम्मत 'दीर्घादित्यतः शश्छोटीत्यन्त षट्सूत्रीपाठोत्तरं 'झलां जश् झशी'त्यतः 'अणोऽप्रगृह्यस्ये'त्यन्तपञ्चसूत्रीपाठे परसवर्णदृष्ट्या जश्त्वस्यासिद्धत्वेन 'शिण्ढि' इत्यत्र ययूपरत्वाभावेन तदप्रवृत्त्या सूत्रे सवर्णग्रहणं निरर्थकमेवेति वाच्यम्, पादयतेः क्विपि 'पादधसती'त्यादौ 'झयोहोऽन्यतरस्याम्' इति पूर्वसवर्णे प्राप्तस्थानिवद्भाव निषेधार्थं सूत्रे तस्यावश्यकत्वात्।

नच 'क्वौ लुप्तं न स्थानिवत्' इति निषेधेन प्रकृते न दोष इति वाच्यम्, हरितशब्दादाचक्षाणण्यन्तात् क्विपि निष्पन्नहरित्शब्दस्य हसतीति योगे टिलोपस्य स्थानिवत्त्वेन 'क्वौलुप्त'मित्यस्याविषयत्वेन तत्र निषेधार्थन्तदावश्यकत्वात्।

नच पञ्चमीसमासस्यानित्यत्वेनात्रापि वारणसम्भव इति वाच्यम्, उक्तरीत्या निष्पन्नहरित्शब्दस्य नमतीति योगे 'हरिन्नमती'ति प्रयोगे 'हयवरट्' भाष्यरीत्याऽनुनासिकसूत्रे सवर्णग्रहणापकर्षेण तस्यापि सवर्णविधित्वादनुनासिके कर्तव्ये निषेधाय तदावश्यकत्वात्।

नन्वस्य भाष्यकृन्मतेनोदाहरणत्वसम्भवेऽपि, सूत्रकृन्मतेन नोदाहरणत्वसम्भव इति वाच्यम्, उक्तरीत्या निष्पन्न हरिच्छब्दस्य लुनातीति योगे 'हरिल्लुनातीत्यत्र' 'तोर्लि' इति सूत्रेण परसवर्णे कर्तव्ये प्राप्तस्थानिवद्भावस्य वारणार्थं सूत्रकृन्मते एतदुदाहरणसम्भवात्।

अद्नं ग्धिः। अदेः क्तिनि "बहुलं छन्दसि" (पा० सू० २।४।३९) इति घस्लादेशः। "घसिभसोर्हलि—" (पा० सू० ६।४।१००) इत्युपधालोपः। "झलो झलि" (पा० सू० ८।२।२६) इति सलोपः; धत्वम्। धस्य जश्त्वम्। "सहस्य सः—" (पा० सू० ६।३।७८) इति सूत्रात् स इत्यनुवर्तमाने "समानस्य च्छन्दस्यमूर्द्धप्रभृत्युदर्केषु" इति सूत्रेण सः। चरि—जक्षतुः॥

"संयोगान्तस्य" (वा० सू० ८।२।२३) तदन्तस्येति। अलोऽन्त्यपरिभाषयेति भावः। यद्यपि विशेषणेन तदन्तविधिलाभात्संयोगस्येत्येव सूत्रयितुमुचितं तथाऽपि प्रत्येकं संयोगसञ्ज्ञेति पक्षे दृषत्करोतीत्यादौ लोपं वारयितुं संयोगावन्तौ यस्येति द्विवचनान्तेन समासलाभार्थमन्तग्रहणम्।

---

शब्दरत्न

तत्र सवर्णग्रहणापकर्षेण तस्यापि सवर्णविधित्वादित्यन्यत्र विस्तरः। सूत्रेण स इति। "सग्धिः स्त्री सहभोजनम्" इत्यमरात्सहस्य सादेश इति प्रतीयते। "झलो झलि" (पा० सू० ८।२।२६) इति सिच एव लोप इति पक्षे छान्दसो वर्णलोपो बोध्यः। स्पष्टं चेदं "धि च" (पा० सू० ८।२।२५) इति सूत्रे भाष्ये। लोके तु सग्धिरित्यसाध्वेवेति बोध्यम्।

---

तत्त्वाऽऽदर्शः

दीर्घे—'प्रतिदीव्ना'। जशि—'सग्धिश्च मे'। अद्-धातोः क्तिनि। 'बहुलं छन्दसि' इति घस्लादेशे 'घसिभसोर्हलिचे'त्यनेनोपधालोपे 'झलोझलि' इत्यनेन सलोपे धत्वे जश्त्वे 'समानस्य छन्दस्य मूर्धप्रभृत्युदर्केषु' इति सूत्रेण समानस्य सादेशे सग्धिरिति सिध्यति। लोके तु सग्धिरित्यसाध्वेव। नचैवम् "सग्धिः स्त्रीसहभोजनम्" इत्यमर ग्रन्थविरोधः, लोके तत्प्रयोगाभावादिति वाच्यम्, 'सघ हिंसायाम्' इति धातोः लोटि मध्यमपुरुषैकवचने धातूनामनेकार्थत्वेन तत्प्रयोगसंभवात्। चरि—'जक्षतुः'। 'अद्'धातोः लिटि प्रथमपुरुष द्विवचने रूपम्। अत्रोपधालोपस्य 'खरिचे'ति चर्त्वं प्रति न स्थानिवत्त्वम्।

तदन्तस्येति। अलोन्त्यपरिभाषया तदन्तस्येत्यर्थः।

वृत्तौ हि उपसर्जनानामेकत्वसंख्यौत्सर्गिकी द्वित्वादिकं तु प्रयत्नलभ्यमिति भाष्ये स्थितम् ॥

---

शब्दरत्न

विशेषणेन । पदस्येत्यधिकारप्राप्तविशेषणेन । एकत्वसंख्येति । अभेदैकत्वसंख्येति तदर्थः । संख्यासामान्याभाव इति यावत् । विग्रहे एकवचनं तु औत्सर्गिकं सुबन्तत्वसम्पत्तिमात्रफलकमिति समर्थसूत्रे भाष्ये स्पष्टम् । भाष्ये स्थितमिति । संयोगसंज्ञासूत्रस्थे इत्यर्थः । एवं च प्रत्येकं संयोगसञ्ज्ञापक्षस्यानन्तरा इति सूत्राक्षरस्वारस्यविरोधेन फलाभावेन चासङ्गतत्वमिति तत्रैव भाष्ये ध्वनिततया ऽत्रत्यमन्तग्रहणं व्यर्थमेव, न तु फलान्तरे ऽभिनिवेशः कार्य इति भावः ।

यत्तु—संयोगेति लुप्तषष्ठीकम्, तच्च पदस्येति चान्तविशेषणम्, संयोगान्तस्य सतः पदान्तस्येत्यर्थमन्तग्रहणमिति, तन्न । तादृशलक्ष्याभावात् । अत एव "व्वसोः" (पा० सू० ६।४।११६ ) इति सूत्रे "द्विशकारको निर्देशः" इति भाष्ये उक्तम् । त्वद्रीत्या संयोगान्तलोपस्य दुर्वारत्वेन शकारद्वयाभावात्तदसंगतिः स्पष्टैव ।

---

तत्त्वाऽऽदर्शः

ननु पदस्येत्यधिकारप्राप्तविशेषणेन संयोगस्येत्यनेन तदन्तविधिलाभसंभवेन सूत्रेऽन्तग्रहणम्व्यर्थमितिचेन्न, 'हलोऽनन्तराः संयोग' इति सूत्रे प्रत्येकं संयोगसंज्ञा इति पक्षे 'दृषत्करोती'त्यादौ लोपवारणाय तत्सार्थक्यात् ।

वस्तुतस्तु सूत्रेऽनन्तरा इति पदेन व्यवहिताभाववतामेव ग्रहणेन फलाभावेन च तत्पक्षस्यैकदेश्युतयाऽन्तग्रहणं व्यर्थमेवेति बोध्यम् ।

(१) केचन संयोगान्तस्य सतःपदान्तस्येत्यर्थमन्तग्रहणमिति, अस्यार्थस्य फलन्तु, सरूप सूत्रे भाष्ये पृथग्विभक्तिपराणामेकशेष इति पक्षे वृक्षसस् इति प्राप्नोतीत्यभिधाय संयोगान्तलोपात्सिद्धमिति भाष्योक्तिसङ्गमनमाहुः । तदयुक्तम् (२) एतादृशलक्ष्याभावात्,

---

(१) प्रक्रिया प्रकाशकारा इत्यर्थः। (२) अयंभावः, पूर्वोक्तार्थाकरणे यादृशलक्ष्यं न सिध्यति तादृशलक्ष्यस्य सम्प्रतिपन्नस्याभावादित्यर्थः। सरूपसूत्रस्थन्तद्भाष्यन्तु, तादृशार्थकरणेनैकसकारस्य निवृत्तावपि 'वृक्षस्' इत्यस्य प्राप्त्यैकदेश्युक्तिरेवेति तादृशार्थकरणं व्यर्थमेव। अतएव कैयटेन 'संयोगान्तस्यलोपादि'त्यस्य हलङ्यादिलोपादिति व्याख्याकृता।

"यण—" इति वाचनिकम् । यद्वा वाच्यो व्याख्येयः । व्याख्या च द्वेधा—'झलो झलि" (पा० सू० ८।२।२६) इत्यतो झल्ग्रहणमपकृष्य झल एव लोपो विधीयत इति । अन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति वा । न च षाष्ठी असिद्धपरिभाषा त्रिपादीस्थत्वेनासिद्धमन्तरङ्गं लोपं न पश्यतीति वाच्यम्, कार्यकालपक्षाभ्युपगमात् । न च "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः", तस्यानित्यत्वात् । उत्तरकालप्रवृत्तेलोपे

शब्दरत्न

अपकृष्येति । तच्च षष्ठ्या विपरिणम्य वाक्यभेदेन सम्बध्यते । तेन पूर्ववाक्यस्य क्वचिद्झल्यपि प्रवृत्तिः । उत्तरवाक्येन च तस्य क्वाचित्कत्वं ज्ञाप्यते । तेन च नातिप्रसङ्गः । ध्वनितं चेदम् "अमो मश्" (पा० सू० ७।१।४०) इत्यत्र भाष्ये । तत्र हि मद्वयात्मकमादेशं विधाय शित्त्वं प्रत्याख्यातम् । एकस्य मस्य संयोगान्तलोप इति च कैयटेन व्याख्यातम् । अनित्यत्वादिति । तत्र च ज्ञापकं "केऽणः" (पा०सू० ७।४।१३) इति निर्देशः । क इ अग इति स्थिते लक्ष्यगतपरत्वमाश्रित्य प्राप्त इकारस्य यण् असिद्धपरिभाषया तत्र व्यावर्त्यते । "अन्तरङ्गं बलीयः" इति परिभाषान्तरं नास्त्येवेति भावः ।

वस्तुत "ओमाङोश्च" (पा० सू० ६।१।९५) इत्याङ्ग्रहणादनित्यमिदम् । तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वादाद्गुणे वृद्धिबाधनार्थम् । उदाहरणं तु अक्षद्यूरिति । अन्यथा अन्तरङ्गे

तत्त्वाऽऽदर्शः

ध्वसोरिति सूत्रस्थ द्विशकारको निर्देश इति भाष्यासङ्गतेश्च । अन्यथा लुप्तनिर्दिष्टः शकार इति वदेत् ॥ यण इति । यणः प्रतिषेधो वाच्यः, इति वाचनिकम्, व्याख्यालब्धं वा, अत्र व्याख्या द्विधा सम्भवति, आद्या, 'झलोझलि' इत्यतो झल्ग्रहण (१) मपकृष्य संयोगान्तस्य झलो लोप इत्यर्थः, अथवा—'असिद्धम्बहिरङ्गमन्तरङ्गे' इति परिभाषयाऽन्तरङ्गे लोपे कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वेन सिद्धिः ।

(१) 'झलोझलि इति सूत्रे झल इति पञ्चम्यन्तम्, तच्च षष्ठ्या विपरिणम्य वाक्यभेदेन सम्बध्यते 'संयोगान्तस्यलोप' इत्येकम्—झल इति द्वितीयम् । आद्यस्य स्पष्टोऽर्थः । द्वितीयस्य संयोगान्तस्यझलोलोप इत्यर्थः । एवञ्च पूर्ववाक्येनैव

अज्ञानन्तर्याभावाच्च । तथा च वार्तिकम्—"संयोगान्तस्य लोपे यणः प्रतिषेधः, न वा झलो लोपाद्", "बहिरङ्गलक्षणत्वाद्वा" इति । इह यथोद्देशपक्षे आद्यं वार्तिकद्वयम्, तृतीयं तु कार्यकालपक्षे इति विवेकः ।

यत्त्वाहुः—वार्तिककृतो वचनं, प्रत्याख्यानप्रकारद्वयं तु भाष्यकृत इति, तन्निर्मूलम्, मतभेदे प्रमाणाभावात् । यदप्याहुः—काव्यं, कलत्रं शाल्वं चाचक्षाणः काव् कलत् शाल्, अदभ्रयतेरधब् इति, तदपि न, पक्षत्रयेऽपि संयोगान्तलोपस्य दुर्लभत्वात् । आद्यपक्षद्वयैकरूप्यार्थं पूर्वं पूर्वमन्तरङ्गं परं परं बहिरङ्गमित्यल्लोपणिलोपयोरसिद्धत्वस्य सुवचत्वात् ।

शब्दरत्न

यण्णूठसिद्धः स्यात् । मतभेद इति । न वेति वाशब्दस्वारस्येन वचनारम्भवादिन एव प्रत्याख्यानप्रकारो भाष्यकृत्तु तर्हि वक्तव्यं न वक्तव्यमित्यादिशब्दैरेव प्रत्याचष्टे इति सर्वं वार्तिककृत एवेति भावः । काविल्यादि । संयोगान्तलोपादिति भावः । ननु पूर्वपूर्वस्थानिकमन्तरङ्गमित्यर्थो न भाष्यसम्मतः किं तु पूर्वपूर्वनिमित्तकमित्येव ।

तत्त्वाऽऽदर्शः

नात्र 'नाजानन्तर्य' इति परिभाषाप्रवृत्तिः तस्याऽनित्यत्वात् । ज्ञापकञ्चात्र—'केऽण' इति निर्देशः । वस्तुतस्तु—'ओमाङोश्चे'त्याङ्ग्रहणादनित्येयम् । परिभाषार्थस्तु—अज्निष्ठाऽन्यानन्तर्यं निमित्तकेऽन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गपरिभाषा न प्रवर्तत इत्यर्थः ।

तथाच—वार्तिकम्, 'संयोगान्तस्यलोपे यणः प्रतिषेधः', नवाझलोलोपात्, 'बहिरङ्गलक्षणत्वाद्वेति' ।

( १ ) अत्र केचित्—आद्यं, वार्तिककृतो वचनम्, प्रत्याख्यानप्रकारद्वयन्तु, भाष्यकृत इति द्वैविध्यमाहु स्तन्न युक्ततरम्, भाष्यकृत्प्रत्याख्यानशैलीविरुद्धत्वात् । सर्वत्र ते तर्हि वक्तव्यम्, न वक्तव्यम्, इत्यादिशब्दैरेव प्रत्याचक्षते । तस्मात्सर्वं वार्तिककृत एवेति बोध्यम् ।

सिद्धौ व्यर्थीभूय द्वितीयं वाक्यं ज्ञापयति, यत् अझल्यपि संयोगान्तलोपो भवतीति, अतएव 'व्यत्ययोबहुलंलिङ्याशिष्यङ्' इति संहितापाठे एकस्य लकारस्य संयोगान्तलोप इति भाष्ये उक्तम् ।

(१) प्रक्रिया प्रकाशकारा इत्यर्थः ।

अत एव कातन्त्रपरिशिष्टे शुक्कयतेः क्विपि शुक्क् इत्युदाहृतम्। वान्तयोः क्विपि ऊठो दुर्वारत्वात्। न च स्थानिवत्त्वम्। क्वौ विधिं प्रति तन्निषेधात्। विचि "लोपो व्योः—" (पा० सू० ६।१।६६) इति लोपस्य प्रसङ्गाच्च। गिरिवेश्मयतेस्तु क्विपि यणः प्रतिषेधाय वचनारम्भपक्षे गिरिवेडित्युचितम्। प्रत्याख्यानपक्षे तु मान्तमेवेति दिक्।

---

शब्दरत्न

किंच प्रतिपादिकाद् णिजुत्पत्तेरेव भाष्यसम्मततया बहिर्भूतसुब्निमित्तकसंयोगान्तलोपोऽपि वहिरङ्ग इत्यरुचेराह—वान्तयोरिति। काव्ये यलोपे स्थानिवत्त्वनिषेधात् "लोपो व्योः" (पा० सू० ६।१।६६) इति कृते वान्तत्वमिति ऊठ् दुर्वारोऽन्त्ये स स्वत एवेति तत्र वलोपं बाधित्वोठ् दुर्वार इत्यर्थः। विचीति। काव्यशब्दे इति शेषः। यलोपे स्थानिवत्त्वनिषेधात्। एवं च प्राचीनोक्तं संयोगान्तलोपोदाहरणत्वमयुक्तमिति भावः। शाल्ने तु अल्लोपादेः स्थानिवत्त्वान्न तत्प्रसक्तिरितिबोध्यम्। मान्तमेवेति। अस्य प्राप्नोतीति शेषः। तस्मात्तत्पक्षेऽपि वाक्यभेदेन व्याख्याय गिरिवेडित्येव। अन्यथाऽऽरम्भप्रत्याख्यानयोः फलभेदः स्यादितिभावः। दिगिति। दिगर्थस्तु-

---

तत्त्वाऽऽदर्शः

अन्ये च काव्यं, कलत्रं, वाऽचक्षाणः 'काव्', 'कलत्', इति संयोगान्तलोपादाहुः, तदतिरभसम्, पूर्वोक्त पक्षत्रयेऽपि तस्य दुर्लभत्वात्। यतो हि पूर्वम्पूर्वमन्तरङ्ग म्परम्परम्बहिरङ्गमित्यलोपणिलोपयोरसिद्धत्वम्। नचायंपक्षः भाष्यसम्मतः, अतएव 'स्रजिष्ठ' इति रूपसिध्यर्थं भाष्यकृता तत्र जातिपक्षाश्रयणरूपप्रयासः कृतः, अन्यथा तत्रोत्तरकाल प्राप्तटिलोपापेक्षया विनोलुको बहिरङ्गत्वेनासिद्धतया 'स्रजिष्ठ' इति सिद्धौ जातिपक्षाश्रयणप्रयासस्य नैष्फल्यापत्तिः स्यादिति वाच्यम्, काव्य शब्दे यलोपे कृतेऽपि 'नपदान्त' सूत्रेण यलोपे स्थानिवत्त्वनिषेधात् 'लोपोव्योरि'ति सूत्रेण यलोपे कृते वान्तत्वादूठो दुर्वारत्वात्। अन्यत्र च स्वत एव वान्तत्वादूठःप्राप्तेर्दुर्वारत्वम्।

गिरिवेश्मयतेः क्विपि आरम्भप्रत्याख्यानयोः फलैक्याय गिरिवेडित्येव रूपम्। अन्यथा—वचनारम्भपक्षे गिरिवेडिति स्यात्, प्रत्याख्यानपक्षे गिरिवेश्म्' इति स्यात्, न कुत्रापि शास्त्रे आरम्भप्रत्याख्यानयोः फलभेदो दृष्टः।

इति पत्त इति। पत्तद्वयस्यापि भाष्ये स्थितत्वादिति भावः। चत्वारि रूपाणीति। यत्तु वदन्ति—धकारयकारोभयद्वित्वे उभयोः पुनर्द्वित्वे लोपविकल्पेऽन्यतरद्वित्वे च नव रूपाणि। तथा हि—एकधं च त्रिधा। एकयं द्वियं त्रियं च। एवं द्विधं त्रिधं च त्रिधेति। न चान्तरङ्गे द्वित्वे बहिरङ्गपरिभाषा न प्रवर्त्तत इति विसर्जनीयसूत्रे भाष्यकैयटयोर्व्यवस्थापितत्वादिति।

शब्दरत्न

संयोगान्तलोपसंयोगादिलोपविषयकतया ऽऽरब्धस्य "यणः प्रतिषेध"—इतिवचनस्य संयोगान्तलोपविषयकस्य "झलो लोपात्" इति प्रत्याख्यानम्। अत एव तत्र "संयोगान्तलोपो झलो लोप" इति भाष्ये व्याख्या कृता। "बहिरङ्गलक्षणत्वाद्वा' इत्यस्य तु बहिरङ्गो यणादेशोऽन्तरङ्गो लोप इति व्याख्यानेन वार्तिकस्वारस्येन चेदृशानां लक्ष्याणामनभिधानमेव। वस्तुतस्तृतीयं वार्तिकं विसर्जनीयसूत्रभाष्ये कार्यकालपक्षमुपक्रम्य "अयुक्तोऽयं परिहारो नवा बहिरङ्गलक्षणत्वाद्वा" इत्यनेन दूषितमित्यलम्।

उभयद्वित्वेति। द्विधं द्वियमेकम्। (१) पुनर्द्वित्वे त्रिधं त्रियम्। (२) अन्यतरेति। एकधं द्वियं त्रियं च (३) (४) एकयं द्विधं त्रिधं च (५) (६) द्वयोरपि द्वित्वे अन्यतरस्य पुनर्द्वित्वे द्विधं त्रियम्, (७) त्रिधं द्वियं च। (८) अनुभयद्वित्वे एकधमेकयम्। (९) लोपविकल्पान्यतरद्वित्वयोः समफलतासम्भवमात्रेण तु तदुक्तिः।

तत्त्वाऽऽदर्शः

संयोगादिलोपविषयकतयेति। 'स्कोःसंयोगाद्यो'रिति सूत्रे यण्ग्रहणसम्बन्धेन यणन्तसंयोगाद्योः सकारककारयो र्लोपोनेति तदर्थः। अतएव 'वाक्यर्थं' वास्यर्थमित्यत्र कसयो र्लोपो न। एतेन—'यणःप्रतिषेध' इति संयोगान्तलोपस्यैव निषेध इति कथनं परास्तम्।

विसर्जनीय सूत्र भाष्ये इति। तत्र हि 'नार्कुटो' नार्पत्य इत्यत्र प्राप्त विसर्गवारणाय वार्तिककृता 'विसर्जनीयोऽनुत्तरपदे' इति वार्तिकमारब्धम्, तत्र चैकदेशिना 'बहिरङ्गपरिभाषया' गतार्थत्वमुक्तम्। सिद्धान्तिना च नैषयुक्तः परिहारः। प्रतिद्वन्द्विभाविनावेतौपक्षौ' सत्यन्तरङ्गे वहिरङ्गम्, सति च वहिरङ्गेऽन्तरङ्गमभवतीति, तस्मादयुक्तोऽयम्परिहार इत्याद्युपसंहृतम्।

अत्रेदं वक्तव्यम्—पुनर्द्वित्वमशुद्धम् । एकस्यां व्यक्तौ एकं लक्षणं सकृदेव प्रवर्त्तत इति "एकः पूर्वपरयोः" ( पा० सू० ६।१।८४ ) इति सूत्रे भाष्ये

---

शब्दरत्न

एकः पूर्वपरयोरिति । तत्र हि यथा ऽनयोः पूलयोः कटं कुर्वित्यादौ एकवाक्यतयैव बोधादेकत्वविवक्षणेनोभयसम्बन्ध्येककटकरणप्रतीतिस्तथा आद्गुणः इत्यादावपि द्वन्द्वनिर्देशाद्विधेयगतसंख्याविवक्षणाच्चोभयोः स्थाने एक एवादेशो भविष्यतीत्येकग्रहणं प्रत्याख्याय शङ्कितम्—शास्त्राधिकारिणः पुरुषान्प्रति प्रवृत्तं संस्कारकं तत्तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेवार्थबोधकं, यथा ऽऽधानेनाग्नीन्संस्कुर्यादित्यर्थकं "वसन्ते ब्राह्मणोऽग्नीनादधीत" इति वाक्यं प्रतिब्राह्मणं सकृदेवार्थबोधकं सकृदेव स्वविषये प्रवर्तकं च । अतएव पुनःपुनराधानादिसंस्कारः, तथा व्याकरणशास्त्रस्य "अवर्णादचि पूर्वपरयोर्गुणो भवति, गुणवान् शब्दश्च साधुर्भवति, स च प्रयोक्तव्यः" इत्येतावत्पर्यन्तं व्यापारात्तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मालेन्द्रादिप्रयोगो न स्यात् । अतस्तल्लक्ष्यविषयवाक्योपप्लवेन वाक्यभेदोऽवश्यं वाच्यः । तद्वत्पूर्वपरविषये ऽपि स्यादिति तत्रैकग्रहणमावश्यकमिति ।

---

तत्त्वाऽऽदर्शः

एकं लक्षणं सकृदेवप्रवर्तत इति । तल्लक्ष्ये लक्षणं सकृदेव प्रवर्तत इत्यर्थः । तल्लक्ष्यत्वञ्च—प्रथमप्रवृत्तावुपयोगित्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तदघटको यस्तद्घटकमात्रोद्देश्यक विकारागमातिरिक्तोय स्तदघटितत्वे सति समानकालिकप्राप्तिविषयाघटितत्वम् । एतेनानचिचेति शास्त्रस्य प्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाण उध् इति समुदायस्तदघटको यः आसितिसमुदाय स्तदघटितत्व 'मुध्' इत्यत्र वर्तत इति तल्लक्ष्यत्वमतस्तत्र द्वित्वमेकवारमेव । आसित्यत्र च तल्लक्ष्यत्वाभावेन लक्ष्यभेदादनचीति द्वित्वं भवत्येव । एवमेव 'पट्व्या' 'मृद्व्या' इत्यादौ लक्ष्यभेदात्पुनर्यण् । अत्रोपयोगित्वेनेति कथनात् 'पथ'इत्यादौ पुनष्टिलोपो न । अन्यथा लोपशास्त्रस्य प्रवृत्तौ इन् इत्युद्देश्यत्वेनाश्रितमपि अथ् इत्यस्य तादृशत्वेनानाश्रयणाल्लक्ष्यभेदात्पुनष्टिलोपापत्तिः । अतएव च 'पथः संख्याव्ययादे'रिति निर्देशसङ्गतिः । विकारागमातिरिक्तेति विशेषणदानेन 'सर्वेषाम्' 'अगौप्सी'दित्यत्र पुनः सुडागमः, वृद्धिश्च न ।

सिद्धान्तितत्वात् । अन्यथा द्वित्वानामानन्त्यापत्तेः । न च "झरो झरि" ( पा० सू० ८।४।६५ ) इति "हलो यमाम्-—" ( पा० सू० ८।४।६४ ) इति

---

शब्दरत्न

तत्र गुणो भवतीत्याद्यंशो लक्ष्यसंस्कारफलक एव, यथाऽऽधानमग्निसंस्कारकं, शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुषसंस्कारक एवेति तदाशयः । ततः सिद्धान्तितम् । यथा नित्यनैमित्तिककाम्यविधीनां तदकरणजन्यप्रत्यवायपरिहाराय फलाय च वाक्यभेदेन तत्तद्विषयकशास्त्रोपप्लवात् पुनः प्रवर्तकत्वम्, तथा ममाप्यसाधुप्रयोगे प्रत्यवायश्रवणान्नित्यसमत्वं प्रयोगविधेः । "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुष्ठुप्रयुक्तः स्वर्गेलोके च कामधुग्भवति" इत्यनेन काम्यत्वं चेतितत्तद्विषयानन्तवाक्योपप्लवेन भवत्येव मालेन्द्रादिप्रयोग इति । एवं प्रयोगविध्यंशस्य नित्यकाम्यत्वव्यवस्थापनेन गुणविध्यंशस्य शुद्धसंस्कारार्थत्वमेवोक्तम् । एवं च तस्याधानादिवदेवाग्निस्थानीयलक्ष्येषु सर्वेषु प्रवृत्तावपि एकाग्नाविवैकलक्ष्ये नावृत्तिरिति पूर्वपरयोर्नादेशद्वयप्रसक्तिरिति तत्तात्पर्यम् । एवं च स्पष्टमेव पूर्वपक्षसिद्धान्तयोरयं न्यायः

---

तत्त्वाऽऽदर्शः

अन्यथा सर्व—आमित्यवस्थायामामः सुडागमे कृते 'यदागम' न्यायेन तस्याऽऽम्त्वत्वात् प्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणो य आम् तदघटको यः सुडागमस्तद्घटितत्वेन तल्लक्ष्यत्वाभावात्पुनः पुनः सुट् स्यात् । तथैव, 'अगौप्सीदि'त्यत्रापि अगुप् स् ई त् इत्यवस्थायां 'वदव्रजेति'वृद्धेः प्रथमप्रवृत्तावाश्रीयमाणो यो गुप् तदघटको य औकारस्तदघटितत्वाभावेन तल्लक्ष्यत्वाभावात्पुनरपि वृद्धिः स्यादिति बोध्यम् । 'गोपायन्ति' इत्यत्र पुनः पररूपायात्र मात्रपद निवेशः । अन्यथा—तल्लक्ष्यत्वान्नस्यात् । 'राजपुरुष' इत्यादौ पुरुषपदोत्तर सुलोपाय समानकालिकेत्यादि विशेषणदलम् । नचैवमपि 'लिट्त्सु' इत्यत्र एकदा चर्त्वे कृते पुनश्चर्त्वं न स्या-तल्लक्ष्यत्वादिति वाच्यम्, समानकालिकेत्यस्य स्थाने प्रथमप्रवृत्त्यनुत्तरकालिकप्राप्तिविषयाघटितत्वस्य विवक्षणेनादोषात् । तथाच स्वीयप्राथमिकप्रवृत्त्युद्देश्यतावच्छेदकावच्छेदेनाश्रीयमाणो यावान्शब्दसमुदायस्तद्विशिष्टाघटितत्वेसति स्वीयप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिविषयाघटितत्वम् । अत्र वै० च स्वघटकत्व, स्वघटकमात्रोद्देश्यकविकारागमातिरिक्तत्वैतदुभयसम्बन्धेनेतिनिष्कर्षः ।

च लोपेन निर्वाहः। लोपस्य वैकल्पिकत्वात्। कथमन्यथा त्रिधं त्रियं चेति भवदुक्तिः सङ्गच्छेत। किं चैवं सति "सर्वस्य द्वे (पा० सू० ८।१।१) इति

शब्दरत्न

संस्कारकविधिविषये सिद्धान्तित इति भावः। "संप्रसारणाच्च" (पा० सू० ६।१।१०८) इति सूत्रे भाष्येऽपि स्फुटोऽयम्। वैकल्पिकत्वादिति। एवं च पक्षे द्वित्वानामानन्त्यापत्त्या परिनिष्ठितत्वाभावापत्तिः। न च त्वदुक्तरीत्या ऽऽनन्त्यापत्तिप्रयुक्तमपरिनिष्ठितत्वमसकृत्प्रवृत्तौ बाधकमिति लभ्यते। तच्च नात्र, द्वित्वस्य वैकल्पिकत्वेन यावच्छक्तिद्वित्वसहितप्रयोगस्य परिनिष्ठितत्वसम्भवात्। अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वं हि परिनिष्ठितत्वमिति वाच्यम्। आनन्त्यापत्तेरित्यस्य चतुष्पञ्चादिधकारयकाराणामापत्त्या त्रिधमित्यादित्वदुक्तमर्यादाभङ्गापत्तेरित्यर्थात्। तद् ध्वनय-

तत्त्वाऽऽदर्शः

तत्रहीति। अत्र केचित्—'एकःपूर्वपरयोरि'तिसूत्रे यथाऽऽधानादि संस्काराणां सकृदेवानुष्ठानं, तथा गुणादीनामपि सकृदेव स्यात्, एवञ्च प्रतिपुरुषमेक एव गुणघटितः साधुःस्यादन्येऽपशब्दाःस्युरित्याशङ्क्य, ज्योतिष्टोमादि शास्त्रदृष्टान्तेन प्रतिप्रयोगङ्गुणादिशास्त्राणाम्प्रवृत्तिर्भविष्यतीत्याद्युक्त्वा 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति न्यायस्याविषयोऽयमिति प्राचीनोक्तिखण्डनपरः पुनर्द्वित्वमशुद्धमित्यादिग्रन्थो न युक्त इत्याहु स्तन्न युक्ततरम्, भाष्याशयानवबोधादितिध्वनयितुमाह—तत्रहीति। 'एकःपूर्वपरयोरि'ति सूत्रभाष्ये इत्यर्थः। तत्र हि गुण इत्यादेर्विधेयसमर्पकत्वेन तत्रैकत्वसंख्याया विवक्षणेनोभयोः पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेनचानयोःपूलयोःकटंकुर्वित्यादितइवोभयसम्बन्ध्येकविधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थम्। नचैकत्वसंख्याविवक्षणेऽपि तत्संख्यायाः केवलान्वयित्वेनाव्यावर्तकत्वात्पूर्वपरयोः स्थाने गुणद्वयं दुर्वारमेवेति वाच्यम्, स्व सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपैकत्वस्य विवक्षणेनादोषात्। साजात्यञ्च—स्वसमभिव्याहृतपदार्थसंसर्गित्व, स्वप्रकृत्यर्थतावच्छेदकवत्वोभयधर्मेण। अत्रत्यविस्तृतविचारोजिज्ञासुभिः व्युत्पत्तिवादटिप्पणे द्रष्टव्यः।

परिनिष्ठितत्वमिति। अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्परिनिष्ठितत्वम्। अत्र नित्यपदं 'सेद्धा' इत्यस्य परिनिष्ठितत्वाय। अन्यथा 'स्वरतिसूती' तिशास्त्रीयोद्देश्यतावच्छेदकं ऊदिद्धातुपरकवलाद्यार्धधातुकत्वं, तेन धर्मेणाऽऽक्रान्त-

शब्दरत्न

न्वक्षति—नवत्वोक्तिरसङ्गतैवेति। आनन्त्यापत्तिरेव तन्न्यायबीजमिति तु न युक्तम्। उदवोढामित्यादौ उद् अवह् स् तामित्यवस्थायां सिज्लोपादेरसिद्धत्वात्सिचि वृद्धावोकारे "लक्ष्ये लक्षणस्य" इति न्यायेन पुनर्वृद्धिर्नेति "सिचि वृद्धिः–" (पा० सू० ७।२।१) इति सूत्रस्थभाष्यविरोधात्, आनन्त्यापत्तेस्तत्राभावात्। एतद्भाष्यप्रामाण्येन विकारकृतभेदेन न लक्ष्यभेदाश्रयणम्। "समः सुटि" (पा० सू० ८।३।५) इति सूत्रं चास्यां मानम्। अन्यथा "समो वा लोपम्–" इत्यनेनान्त्यलोपे पुनर्द्वित्वेन त्रिसकारस्यापि सिद्धयैतद्वैयर्थ्यं स्पष्टमेव। "इरयोरे" (पा० सू० ६।४।७६) इति सूत्रे इरयोरिति द्विर्वचनं तु स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वाप्राप्त्या तत्प्राप्तये इति न तदस्यां मानम्। न च तत्र "सहिवहोरोत्–" (पा० सू० ६।३।११२) इति तपरत्वसामर्थ्याद् न वृद्धिरिति वाच्यम्, अशाब्दत्वात्, अतत्कालव्यावृत्तेरेव तेन शब्दमर्यादयालाभात्। एतेन सुद्धयुपास्ये पूर्वधस्य द्वित्वे जश्त्वे लक्ष्यभेदात्पुनर्द्वित्वमित्यपास्तम्। पूर्वमकारस्येदानीमोकारस्येति लक्ष्यभेदस्योदवोढामित्यादावपि सत्त्वेनोक्तभाष्यविरोधात्। विका-

---

तत्त्वाऽऽदर्शः

स्वात्सेद्धा इत्यस्य परिनिष्ठितत्वं न स्यात्। अत्राप्रवृत्तेति निवेशेन 'देवदत्तो भवती'-त्यस्य परिनिष्ठितत्वम्, अन्यथा तत्र 'तिङ्ङतिङः' इत्यनेन निघाते कृतेऽपि नित्यविधिः तिङ्ङतिङ इति, तस्योद्देश्यतावच्छेदकमतिङन्तात्परंतिङन्तपदं, तेन धर्मेण 'देवदत्तो-भवती'ति प्रयोगस्याऽऽक्रान्तत्वमेवेति परिनिष्ठितत्वं न स्यात्।

नन्वेवमपि 'हरीएताविं'त्यस्य परिनिष्ठितत्वं न स्यात्, यतो हि अप्रवृत्तनित्यविधिरिकोयणचीतिविधि स्तस्योद्देश्यतावच्छेदकमच्परकाव्यवहितपूर्वत्वविशिष्टेकृत्वन्तेन धर्मेणाऽऽक्रान्तैव 'हरीएताविति', तथाच—प्रगृह्यप्रकृतिभावे कृतेऽपि परिनिष्ठितत्वं न स्यात्, इति चेन्न, परिष्कारे बाधकाबाधित इति निवेशेनादोषादिति बोध्यम्।

आनन्त्यापत्तिरिति। खण्डनकारा आनन्त्यापत्तिरेव 'लक्ष्ये लक्षणन्याये' बीजमित्याहुस्तन्नयुक्तम् 'सिचिवृद्धिरिति'सूत्रभाष्ये उदवोढामि'त्यत्र लक्ष्येलक्षणन्यायेन तत्रानन्त्यापत्तेरभावेऽपि पुनर्वृद्धिवारणकरणात्। सिद्धान्तेऽत्रन्याये मानञ्च—'समःसुटीति' सूत्रमेव, अन्यथा—( तन्न्यायानङ्गीकारेइत्यर्थः ) 'समोवालोपमेके'इत्यनेनान्त्यलोपे पुनर्द्वित्वेन त्रिसकारस्यापि सिद्धावेतद्व्यर्थमेव स्यात्।

द्वित्वमपि पुनः पुनः प्रवर्तेत। अत एव "लिटि धातोः—" (पा० सू० ६।१।८) इति सूत्रे ऽनभ्यासग्रहणं भाष्ये प्रत्याख्यातम्। सन्नन्ताद्यङन्ताद्वा णिचि चङि द्वित्वाभावाय तदिति तु कैयटादिभिरुक्तम्। तस्मादिह त्यज

शब्दरत्न

रान्यानुपूर्व्यैक्येन लक्ष्यैक्यं तु ममाप्यस्त्येवेति दिक्। इति द्वित्वमपीति। एतेनाष्टमिकवर्णद्वित्वं स्थाने द्वित्वमिति लक्ष्यभेदोऽस्तीति परास्तम्। पदद्वित्वस्याप्यावृत्त्यापत्तेः। वस्तुतस्तत्षाष्ठद्वित्ववन्न स्थाने द्विर्वचनमित्यन्यत्र निरूपितम्। प्रत्याख्यातमिति। "अनभ्यासप्रतिषेधोऽनर्थकश्छन्दसि वावचनात्, नोनूयतेर्नोनावेत्यादौ न दोष" इति भाष्यम्। एकस्यैकाचो द्वित्वे कृते एकाज्व्यपदेशे हेतोरचो द्विरुक्तत्वाद्, अनेन न्यायेनाचः पुनः पुनर्द्वित्वाप्राप्तौ अवयवान्तरस्यैकाच्त्वाभावेन तदप्रवृत्तौ तद् व्यर्थम्, इति च तदाशयः कैयटेनोक्तः। कैयटादिभिरिति। अत्रारुचिबीजं तु भाष्यप्रामाण्येन, "तेषामनभिधानं, "स्तौतिण्योः—" (पा० सू० ८।३।६१) इति सूत्रस्थः सोषुप्यतेः

तत्त्वाऽऽदर्शः

नचैषल्लोपो न पाणिनिसम्मत इति वाच्यम्, 'अप्रतिषिद्धंचानुमतंभवती'ति न्यायेन पाणिनिसम्मतत्वात्। किञ्च शास्त्रान्तरप्रसिद्धाश्रयणस्य भाष्यकारसम्मतत्वमपि। अतएव 'मृजन्ति' 'मार्जन्ति' 'ममृजतुः' 'ममार्जतुः' इत्यादिरूपाणाम्, 'इहान्येवैयाकरणाः मृजेरजादौसङ्क्रमेविभाषावृद्धिमारभन्त' इति भाष्यकृतोक्तम्।

अत्र केचित्—'इरयोरे' इति सूत्रे इरयोरिति द्विवचनं लक्ष्येलक्षणन्यायेबीजमाहुस्तदपि न मनोरमम्, यतो हि तत्सूत्रं 'प्रथमन्दध्रआप' इत्यस्य साधनायारब्धम्, तत्र धाञो लिटि तस्य झादेशे 'लिटस्तझयो'रिति सूत्रेणेरेजादेशे तस्यानेन रे आदेशे कृते तस्येडागमे पुनरनेन रेभावो भवति, एवञ्च स्वविधेयस्य रेभावस्येडागमेऽपि यदागमाइति न्यायेन रेशब्दत्वात्पुनस्तस्योद्देश्यत्वाप्राप्त्या रेभावो न स्यादिति सूत्रे द्विवचनस्य सार्थकत्वम्।

खण्डनकारोक्तां युक्तिं खण्डयति,—एतेनेत्यादिना। अन्यथा क्रियासमभिहारे 'लुनीहिलुनीहीत्येवायंलुनाती'त्यादौ पुनर्द्वित्वापत्तिः, एवमेव 'पचतिपचती'त्यादि वीप्सायामपि पुनर्द्वित्वापत्तिरिति बोध्यम्।

नच षाष्ठाष्टमिकपदद्वित्वयोर्नित्यतया क्वचित्तस्य विश्रामोऽवश्यंवाच्यः, एवञ्च लाघवात्प्रथमप्रवृत्तावेव विश्रामः कल्प्यते, अन्यथा रूपानन्त्यापत्तिरिति वाच्यम्,

वा पञ्चमादीनि रूपाणि स्वीकुरु वा रूपानन्त्यमिति नवत्वोक्तिरसङ्गतैव। सकारद्वित्वेनाष्टौ विसर्गद्वित्वेन षोडशेति त्वन्यदेतत्। यदप्युक्तं त्रैपादिके ऽन्तरङ्गे इत्यादि। तदपि न। नार्कुटो नार्पत्य इत्यत्र विसर्गवारणाय वृद्धेरसिद्धत्वस्य तत्रैव भाष्ये स्पष्टत्वात्। "संयोगान्तलोपे यणः प्रतिषेधः" इत्यस्य वहिरङ्गत्वेन प्रत्याख्याततत्वात्। स्वयमपि तथैवानूदितत्वाच्च। तस्मादिह

शब्दरत्न

सन् 'सोगुपिषत' इति भाष्यप्रयोगोऽपि छान्दस इत्याहुः। रूपानन्त्यमिति। रूपाधिक्यमित्यर्थः। तदाह—नवत्वोक्तिरसङ्गतैवेति। सकारद्वित्वे इति। अच्परयत्वावच्छिन्नं ह्यस्य लक्ष्यम्, तत्रैकस्मिन् धकारे प्रवृत्तावपि तादृशे सकारे लक्ष्यभेदात्पुनः प्रवृत्तिर्भवत्येवेति भावः। एवं संप्रसारणादिविधौ यण्त्वावच्छिन्नमुद्देश्यमिति लक्ष्यभेदाद्यावदुद्देश्यं पुनः प्रवृत्तिर्भवत्येवेति न "न संप्रसारणे" (पा० सू० ६।१।३७) इत्यादेर्वैयर्थ्यमिति बोध्यम्। तदपि नेति। यथोद्देशपक्षे इत्यनुक्त्वा सामान्येन यदुक्तं तदपि नेत्यर्थः। तस्मादिहेति। "यणो मय" इत्यत्रेत्यर्थः। विसर्जनीयसूत्र-

तत्त्वाऽऽदर्शः

उक्तरीत्याऽऽनन्त्यापत्तेरभावात्, सकृत्प्रवृत्त्यैव वीप्सादिद्योतनसम्भवाच्च। अन्यथा 'परेर्वर्जने' इत्यस्य वैकल्पिकतया तस्य पुनः प्रवृत्त्यापत्तेः।

नच 'लिटिधातो'रिति सूत्रेऽनभ्यासग्रहणाल्लक्ष्येलक्षणंमितिन्यायोऽनित्य–इति पुनर्द्वित्वस्य प्रवृत्तिसम्भव इति वाच्यम्, भाष्यविरोधात्। भाष्ये—तत्सूत्रस्थानभ्यासग्रहणस्य प्रत्याख्याततत्वादित्यर्थः।

छान्दसइत्याहुरिति। अत्र केचित्—लिटिधातोरिति सूत्रेऽनभ्यासग्रहणमनावश्यकम्, 'सन्यङो'रित्यत्र च तदावश्यकमेवेत्येवं कैयटाद्युत्प्रेक्षितमेव प्रत्याख्यातृभाष्यकृत्तात्पर्यम् युक्तम्, अतएव 'छन्दसिवावचनादि'तिपरिहारस्य यङन्तप्रकृतिकलिडन्ते 'लिटिधातो'रित्यस्याप्रवृत्तिरेव प्रयोजनत्वेनोपदर्शिता भाष्ये, नतु सोषुप्यतेः सनि 'सोषुपिषत' इत्यत्र यङन्तप्रकृतिकसन्नन्ते 'सन्यङो'रित्यस्याप्रवृत्तिः, प्रत्याख्यानस्य प्रकरणमात्रविषयकत्वे 'सोषुपिषत'इति प्रयोगस्य छान्दसत्वेचेयमेव तत्प्रयोजनत्वेनोपदर्शितास्यादिति वदन्ति।

यथोद्देशपक्षो ग्राह्यो बहिरङ्गपरिभाषा अप्रवृत्तये। तथा च भाष्ये मयः परस्य यणो द्वित्वे दध्यत्रेत्युदाहृतम्। न चैवमपि "इकोऽसवर्णे–" (पा० सू० ६।१।१२७) इति शाकलेन रूपान्तरमस्त्विति वाच्यम्। समासे तन्निषेधात्। न च नित्यसमास एव तन्निषेध इति वाच्यम्। भाष्ये नित्यग्रहणस्य प्रत्याख्यातत्वात्। यथोत्तरं मुनीनां प्रामाण्यात्। नन्विह यणेव दुर्लभः। सुधीशब्दस्य ध्यायतेः सम्प्रसारणेन निष्पन्नत्वेन "सम्प्रसारणाच्च" (पा० सू० ६।१।१०८) इति पूर्वरूपापत्तेरिति चेन्न। "सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणम्" इति वार्तिकोक्तेः। सम्प्रसारणस्थानिकस्यातथात्वाच्च। न चैवमपि

---

शब्दरत्न

भाष्यात्तु कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिरिति लभ्यते, मूलं तु कैयटानुसारेणेतिपरे। संप्रसारणस्थानिकस्येति। स्थाने जातस्येति शेषः। साक्षात्संप्रसारणस्थानिकपूर्वरूपादेः "हलः" (पा० सू० ६।४।२) इत्यारम्भसामर्थ्यादल्विधौ स्थानिवत्त्वा-

---

तत्त्वाऽऽदर्शः

मूले-समानाङ्गमिति। ध्यै धातोः क्विपि ध्यायोसम्प्रसारणमिति सम्प्रसारणे धी आ इत्यत्र पूर्वरूपे हल इतिदीर्घे सुधीति, तस्य चोपास्य शब्देन समासे सुधी-उपास्य इत्यत्र धीतीकारस्य सम्प्रसारणस्थानिकत्वेन सम्प्रसारणत्वादुकारेण सह पूर्वरूपापत्तिः, अतः वार्तिककृता सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणङ्कर्त्तव्यमित्युक्तम्। समानाङ्गत्वञ्च विभिन्नाङ्गाघटकत्वम्। एवञ्च सम्प्रसारणाघटिताङ्गाघटकेऽचिपरतः पूर्वरूपं भवति इतिनियमः। तथाच प्रकृते सम्प्रसारणाघटितं यदङ्गमुपास्य इति तद् घटकत्वमेवोकारस्येति न पूर्वरूपम्। नच सुध्युप्तमित्यत्र सम्प्रसारणमुप्तमित्यत्रोकारस्तद्घटितमङ्गमुदासीनं तदघटकत्वमुकारस्यास्तीति पूर्वरूपं स्यादिति वाच्यम्, सम्प्रसारण विशिष्टेऽचि परे पूर्वरूपं स्यादित्यर्थेनादोषात्। वै० च स्वाव्यवहितोत्तरत्व स्वाघटिताङ्गाघटकत्वैतदुभयसम्बन्धेन। स्वपदेनोकाररूपं सम्प्रसारणं गृह्यते तदास्वाव्यवहितोत्तरत्वसम्बन्धोनायाति, यदा च सुधीतीकाररूपं सम्प्रसारणं स्वपदेन गृह्यते, तदाऽऽद्यसम्बन्धसत्वेऽपि स्वाघटितमङ्गमुप्तेति तद्घटकत्वमेवास्तीति द्वितीयसम्बन्धाभावान्न पूर्वरूपम्। अत्र सम्प्रसारणवैशिष्ट्यमचि, आहोस्विदज्वैशिष्ट्यं सम्प्रसारणे, उभयथ ऽपि पूर्वोक्तस्थलेदोषवारणं भवत्येव, परन्तु अज्वैशिष्ट्यं सम्प्रसारणे गृह्यतेचेत्-

"न भूसुधियोः" ( पा० सू० ६।४।८५ ) इति, यण्निषेधः शङ्क्यः, आङ्गत्वेन प्रत्यये परत एव तस्य प्रवृत्तेः। अनन्तरस्येति न्यायेन "एरनेकाचः-" ( पा० सू० ६।४।८२ ) इति "ओस्सुपि" ( पा० सू० ६।४।८३ ) इति च सूत्रद्वयेन प्राप्तस्यैवनिषेधाच्च। धात्रंश इति। अत्र रेफस्य द्वित्वं न। द्वित्व-

---

शब्दरत्न

ङ्गीकारेऽपि पूर्वरूपोत्तरं प्रवृत्तस्य "हलः" (पा० सू० ६।४।२) इति दीर्घस्य स्थानिव-

---

तत्त्वाऽऽदर्शः

देवदत्तहूः' इति रूपासिद्धिः। व्हेञ्धातोः 'आदेचउपदेशइत्यात्वे' 'आतोऽनुपसर्गेक' इति क प्रत्यये देवदत्त व्हा अ इत्यवस्थायां सम्प्रसारणे धात्ववयवाकारेण सह पूर्वरूपे जाते कपाकारेण सह पूर्वरूपे कर्तव्ये समानाङ्गत्वं नायाति, प्रथमसम्बन्धसत्वेऽपि स्वघटितं यदङ्गं हू इति तद्घटकत्वमेव सम्प्रसारणस्येति अघटकत्वाभावात्पूर्वरूपं न स्यादतः सम्प्रसारणवैशिष्ट्यमेवाचि स्वीकार्यम्। तथाच हू आ इति स्थितौ स्वाव्यवहितोत्तरत्वमकारेऽस्ति, स्वाघटकमङ्गमुदासीनन्तदघटत्वञ्चास्तीति सम्प्रसारणवैशिष्ट्यमकारे आगतमिति पररूपे देवदत्तहूः इति रूपसिद्धिरिति बोध्यम्।

मू० धात्रंशइति। धात्रंश इत्यत्र 'यणोमय' इत्येनेन प्राप्तरेफस्य द्वित्वं 'तक्रन्यायेन' वार्यते। तन्न्यायशरीरञ्च 'येन नाप्राप्ते योविधिरारभ्यते स तस्यबाधकोभवतीति' येनेति, अत्रकर्तरि तृतीया। प्राप्तमिति, भावेक्तः, यत्कर्तृकप्राप्तौ सत्यामित्यर्थः। अत्र नाप्राप्त इति द्वितीयाभावसत्वात्तस्य च प्रथमाभावप्रतियोगिस्वरूपत्वेन येनप्राप्त इत्येवार्थलाभाद्येनप्राप्तइत्येवक्तव्ये नञ्द्वयोपादानं व्यर्थंसदवश्यप्राप्तविवेति बोधयति। अवश्यप्राप्तिर्नाम=व्यापकप्राप्ति स्तथाच यत्कर्तृकव्यापकप्राप्तौ सत्यामित्यर्थः। अतएव 'सुपिचे'ति शास्त्रं 'बहुवचने झल्ये'दिति शास्त्रेणापवादत्वान्न बाध्यते। व्यापकताच विषयतयोरेवेति व्याप्यविषयताकशास्त्रेण व्यापकविषयताकशास्त्रस्य बाधो भवतीत्यर्थः। तथाच रत्वावच्छिन्नव्याप्यविषयताकाचोरहाभ्यामिति शास्त्रेणयरत्वावच्छिन्नव्यापकविषयताकानचिचेति शास्त्रस्य बाध इति। अनचिचेत्यत्र यरपदे रेफभिन्नातिरिक्तत्वेन संकोचेऽचः परस्य रेफभिन्नस्य यरो द्वित्वम्भवतीत्यर्थात् 'द्वयंनुभव'इत्यादौ न रेफस्यानचिचेति द्वित्वम्। किन्तर्हि 'अचोरहाभ्यामि'ति यकारस्यैव। धात्रंशः' 'मद्रह्रद'इत्यादौ रेफस्य द्वित्ववारणाय ( रेफस्यानुनासिकपर

प्रकरणे रहाभ्यामिति साक्षाच्छ्रुतेन निमित्तभावेन रेफस्य कार्यित्वबाधात्। सुध्युपास्य इत्यादौ तु स्थानित्वेन निमित्तत्वमिकः "तस्मादित्युत्तरस्य" ( पा०

---

शब्दरत्न

द्भावेन संप्रसारणत्वे मानाभाव इति भावः। द्वित्वं नेति। "यणो मय" इति प्राप्तं नेत्यर्थः। द्वित्वप्रकरणे इति। तथा च भाष्यम्—"रेफस्यानुनासिकपरसवर्णद्विर्वचनप्रतिषेधो वक्तव्यः" स्वर्नयति। कुण्डं रथेन। मद्रह्रदः। भद्रह्रदः। न वक्तव्यः। रेफोष्मणां सवर्णा न सन्ति। नेमौ रहौ कार्यिणौ किं तर्हि निमित्तं द्विर्वचनस्येति।" अन्यथा वचनारम्भे द्विर्वचनमात्रस्य निषेधेन फलभेदे प्रत्याख्यानानापत्तेः। साक्षाच्छ्रुतेन–विशेषशब्दबोधितेन। यत्र यत्र द्वित्वनिमित्तत्वं तत्र सर्वत्र वाक्यान्तरेण "अनचि" ( पा० सू० ८।४।४७ ) इत्यनेन कार्यित्वप्रसक्तेरनवकाशेन तेन भाष्यप्रामाण्यात्सामान्यत एव द्वित्वकार्यित्वं बाध्यते इति भावः।

---

तत्त्वाऽऽदर्शः

सवर्णद्विर्वचनप्रतिषेधो वक्तव्यः ) इतिवचनमारब्धम्वार्तिककृता। भाष्यकारेण च 'नेमौ रहौ कार्यिणौ किन्तर्हि निमित्तं द्विर्वचनस्येत्युक्त्वा वार्तिकस्थ द्विर्वचनग्रहणम्प्रत्याख्यातम्। धात्रंशः, मद्रह्रद इत्यत्रोक्तन्यायस्याऽविषयतयाऽचोरहाभ्यां यणोमय इति द्वित्वस्य दुर्वारतया प्रत्याख्यानासङ्गतिः, अतः बाध्यसामान्यचिन्तयाऽर्थानुरोधात्सर्वत्र द्वित्वप्रकरणे यर्पदेन यण्पदेन च रेफभिन्नस्यैव ग्रहणमित्यदोषः। मध्वत्रेत्यत्र निमित्तत्वाऽप्राप्त्या स्थानित्वस्य चारितार्थ्येन सुध्युपास्य इत्यत्र तन्न्यायस्याविषय एवेति तस्मादित्युत्तरस्येति ज्ञापकानुसरणम्व्यर्थमिति शब्दरत्नकारः। वस्तुतस्तु-मनोरमाशयश्चानेन न्यायेन यैर्धर्मैर्विषयताऽवच्छेद्यते, यैश्च विशेष्यदलप्रविष्टपदार्थैः-सङ्कोच्यते, तत्सकलविशेषितव्याप्यविषयताश्रयातिरिक्तत्वेन व्यापकविषयताश्रये सङ्कोचः, नपुनर्व्याप्यविषयतावच्छेदकधर्मावच्छिन्नातिरिक्तत्वेन व्यापकविषयतावच्छेदकधर्मावच्छिन्ने। तथासति 'एकाचो द्वे'इत्यस्य आद्याज्भिन्नप्रथमैकाचोद्वित्वम्भवतीत्यर्थे 'आटे'त्यत्रद्वित्वाऽऽपत्तिः। मन्मते द्वितीयैकाजवधिकपूर्वत्वविशिष्टधात्ववयवप्रथमैकाज्भिन्नो यो धात्ववयवप्रथमैकाच् तस्य द्वित्वमित्ये'काचोद्वे' इत्यस्यार्थसत्वादाटेत्यत्र द्वित्वसिद्धिः। एवञ्च यरव्यवहितपूर्वत्वविशिष्टाजव्यवहितोत्तरत्वविशिष्टरत्वावच्छिन्न

प्रगृह्यम्, अदसः, एच्च द्विवचनमित्येव कुतो न सूत्रितम्। एवं हि पूर्वसूत्रस्थमोदूद्ग्रहणं प्रकृतसूत्रे मादूग्रहणं च मास्तु। एकदेशानुवृत्तिक्लेशोऽपि नेति।

"शे" (पा० सू० १।१।१३) छान्दसमपीदं सन्दर्भशुद्ध्यर्थमुक्तम्। वस्तुतस्त्वनुकरणार्थतया लोकार्थमपि सम्भवत्येव। त्वे रायो मे राय इत्यादौ त्वे इति, मे इति इत्यनुकरणे प्रयोजनलाभात्। अस्मे इति— अस्मभ्यमित्यर्थः। भ्यसः "सुपां सुलुक्" (पा० सू० ७।१।३९) इति शे आदेशः "शेपे लोपः" (पा० सू० ७।२।९०)।

"निपात" (पा० सू० १।१।१४) अनाङिति पर्युदासादेवाज्रूपनिपाते लब्धे निपातग्रहणमुत्तरार्थं स्पष्टार्थमिहैव कृतम्। आ एवमिति पूर्वं प्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतकोऽयमाकारः। पूर्वमित्थं नामंस्था इदानीं त्वेव मन्यसे इत्यर्थः। आ एवं किलेति। स्मरणद्योतकोऽयमाकारः। वाक्येत्यादि। तथा च भाष्यम्।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्॥ इति

अत्र अङिल्लक्षण एव तात्पर्यं लाघवात्। अन्यस्य ङित्त्वं त्वर्थसिद्धम्।

---

शब्दरत्न

सञ्ज्ञां प्रत्यसिद्धत्वं दुर्वारमित्यपास्तमिति चेन्न। 'अप्रगृह्यादस' इति न्यासेनैव सिद्धौ सामान्यसञ्ज्ञासूत्रकरणसामर्थ्येन "प्लुतप्रगृह्या" (पा० सू० ६।१।२२५) इत्यत्राप्युपस्थित्या तत्सामर्थ्येनासिद्धत्वबाधात्। हे ऽमुकाऽमुक इत्यादौ व्यवस्थितविभाषाश्रयणात्तयोरनभिधानाद्वा सूत्रमतेऽपि नानुनासिक इत्याशयात्। स्पष्टं चेदं भाष्ये।

छान्दसमिति। शे आदेशस्य च्छान्दसत्वादिति भावः। मे इतीत्यनुकरणे इति। प्रकृतिवदनुकरणमित्यतिदेशेन पदत्वात्पदान्तत्वप्रयुक्तः प्रकृतिभावस्तत्र, तेनातिदेशेन प्रगृह्यत्वं तु न, त्वे राय इत्यादावनुकार्ये फलाभावेन प्रगृह्यत्वाप्रवृत्त्या तदनुकरणेऽतिदेशेनासिद्धयोपदेशप्रवृत्तिरेव वाच्येति भावः।

अन्यथात्वेति। अनभिमतत्वेत्यर्थः। तदाह—नामंस्था इति। स्मरणेति। विस्मृतस्य स्मरणविषयताद्योतक इत्यर्थः। मर्यादाभिविधावित्यत्र मध्यमपदलोपी

ईषदर्थेत्यादिस्तु अवयुत्यानुवादः। एवं च अभ्र आँ अप इत्यत्र सप्तम्यर्थं वृत्तेरप्याकारस्य ङित्त्वात्। "आङोऽनुनासिकश्छन्दसि" (पा० सू० ६।१।१२६) इति प्रवर्तत इति भावः।

"ओत्" (पा०सू० १।१।१५) निपातः किम्? देवोऽसि। वायवायाहि।

"संबुद्धौ" (पा० सू० १।१।१६) ऋषिर्वेदः "तदुक्तमृषिणा" इत्यादौ तथा दर्शनादित्यभिप्रेत्याह—अवैदिक इति। सम्बुद्धौ किम्? अहो इति। अत्र परत्वाद्विकल्पो मा भूत्। यत्तु "ओत्" इत्यत्र निपातानुवृत्तेरिह च सम्बुद्धिग्रहणस्य प्रत्युदाहरणं वृत्त्यादावुक्तं गवित्ययमाहेति, तन्न। तत्र

शब्दरत्न

समासः। तत्सहिते ऽभिविधावित्यर्थः। सप्तम्यर्थेति। तद्वृत्तित्वं च तस्य निरुक्ते स्पष्टम्। अव्ययीभावाभावश्च श्रुतौ छान्दसत्वाद् बोध्यः।

अत्र परत्वादिति। न चैतदभावे नित्यविधिर्दुर्वारः। इतिशब्दातिरिक्ते "ओत्" (पा० सू० १।१।१५) इत्यस्य निपातिरिक्ते "सम्बुद्धौ—" (पा० सू० १।१।१६) इत्यस्य चारितार्थ्येन सामर्थ्याभावादेव च फले ऽविशेष इति वाच्यम्। परत्वेन विकल्पप्रवृत्तावभावपर्यन्तमप्यस्य व्यापारेण सकृद्गतिन्यायेन "ओत्" (पा० सू० १।१।१५) इत्यस्य तदभावे ऽप्रवृत्तेः। अत एव "न यदि" (पा०सू० ३।२।११३) "विभाषा साकाङ्क्षे" (पा० सू० ३।२।११४) इति सूत्रे निषेधीयोभयत्र विभाषेति

तत्त्वाऽऽदर्शः

सम्बुद्धौ किमिति। अयं भावः 'सम्बुद्धौ शाकल्यस्येतावनार्षे' इति सूत्रे सम्बुद्धिग्रहणं किमर्थम्, 'अहोइती' त्यत्र परत्वादोदिति सूत्रं प्रबाध्यानेन विकल्पो माभूदिति। नच आकडारादेकासंज्ञेति सूत्रेऽन्यत्र संज्ञानां बाधकभावोनास्तीति कथनेन प्रकृते कथं परत्वाद्विकल्प इति वाच्यम्, ज्ञापकस्य संज्ञाभेदविषयत्वात् प्रकृते संज्ञाया एकत्वात्।

वस्तुतस्तु नेदं युक्तम्, साक्षात्प्रभृतीनिचेति सूत्रस्थ भाष्यविरोधात्। तत्र हि—च्व्यन्तस्य प्रतिषेधो वक्तव्यः, किम्प्रयोजनम्, लवणीकृत्य न वा वक्तव्यः, पूर्वेण कृतत्वात्। अस्त्वनेन विभाषा, पूर्वेण नित्यो भविष्यतीति भाष्यकृतोक्तम्। कैयटश्च तत्राह—अत्र परत्वादनेन विभाषा प्राप्नोति, नित्या च गतिसंज्ञेष्यते, सा च पुनः

प्रगृह्यसञ्ज्ञासत्त्वेऽपि प्रकृतिभावाप्रसक्तेः "इकोऽसवर्णे" पा०सू० ६।१।१२७ इत्यत्र हि पदान्तग्रहणमनुवर्तत इत्याकरे स्पष्टम्। एवञ्च 'प्लुतप्रगृह्या' (पा० सू० ६।१।१२५) इति सूत्रे तत्सम्बन्ध आवश्यकः। गविति च न पदम्। अनुकार्यानुकरणयोरभेदविवक्षया अर्थवत्त्वाभावेन विभक्ते-

शब्दरत्न

सङ्गच्छते, अन्यथा परत्वादेतत्प्रवृत्तावप्यनेन निषेधाभावे पूर्वसूत्रस्य दुर्वारत्वेन सा दुर्लभा स्यात्। न च "आकडार" (पा० सू० १।४।१) सूत्रेणान्यत्र सञ्ज्ञानां बाध्यबाधकभावाभावस्य ज्ञापितत्वात्परत्वाद्विकल्प इत्यसंगतमिति वाच्यम्। सञ्ज्ञाया एकत्वात्, ज्ञापकस्य च विशेषापेक्षत्वेन सञ्ज्ञाभेदविषयत्वादिति भाव इति केचित्।

परे तु "ओत्" (पा० सू० १।१।१५) इत्यस्येतिशब्दनिरपेक्षत्वेनान्तरङ्ग-त्वमिति परत्वं न युक्तं, "सम्बुद्धौ" (पा० सू० १।१।१६) इति तु निपातपदाननु-वृत्तये। अन्यथौदन्तनिपातस्यैवेतौ विकल्पापत्तिः। नित्यविकल्पविध्योर्युगपत्प्रवृत्तावपि विरोधाभावेन परत्वादित्यस्यासङ्गतेः। एवं च परत्वादित्यस्योत्कृष्टत्वादपवादत्वा-दित्यर्थः। ओद्ग्रहणानुवृत्त्यैव सिद्धे पुनरोद्ग्रहणेनापि तन्निवृत्तिसिद्धौ वैचित्र्यार्थमेव सम्बुद्धिग्रहणमित्याहुः। आवश्यकइति। अन्यथा "इकोऽसवर्ण" (पा० सू० ६।१।१२७) इत्यत्र मण्डूकानुवृत्त्यापत्तिः। सा च सम्बन्धतदभावोभयकल्पनापत्त्या

तत्त्वाऽऽदर्शः

प्रसङ्गात्सिद्धमिति कल्पनीया। यदि एक संज्ञा विषयेऽभावपर्यन्तं व्यापारेण विक-ल्पाभावे नित्यस्याप्राप्तिरिति स्वीकारस्तदा तत्रत्यवार्तिकस्यावश्यकतया तत्प्रत्या-ख्यानविरोधः स्पष्ट एवेति बोध्यम्।

नव्यास्तु—ओत् इति सूत्रस्येतिशब्दनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यप्रगृह्यत्वे सिद्धे सूत्रे सम्बुद्धिग्रहणं निपातपदाननुवृत्तये, अन्यथौदन्तनिपातस्यैवेतौ विकल्पापत्तिः स्यात्। ननु सूत्रे सम्बुद्धिग्रहणमेवन्तात्पर्यकन्तदा तन्न कार्यं सम्बुद्धिपदन्त्यक्त्वा प्रकृतसूत्रेऽप्योद्ग्रहणङ्कार्यम्, तत्सामर्थ्यादेव निपातपदाननुवृत्तिर्भविष्यतीति चेन्न, सूत्रे वैचित्र्यार्थमेव सम्बुद्धिग्रहणात्। वैचित्र्यञ्च—निपातसंज्ञारहितस्य स्वरादिगण-पठितस्य मिथो इत्यव्ययस्येति शब्दे परतो विकल्पापत्त्या तद्वारणाय सम्बुद्धिग्रहण-स्यावश्यकत्वमेवेति बोध्यमित्याहुः।

रनुत्पादात्। "उञः" (पा० सू० १।१।१७) "निपात एकाज्–" (पा० सू० १।१।१४) इति प्राप्ते विभाषेयम्।

"ऊँ" (पा० सू० १।१।१८) अनुनासिक इति। तेनास्मिन्परे "यरोऽनुनासिक–" (पा० सू० ८।४।४५) इति विकल्पः। यदेतनूँ इति पठसि, यदेतदूँ इति वा तद्दीर्घमित्यादि। एतदर्थमेव तत्रानुनासिकग्रहणम्। अन्यथा यरो ञमि ञम्वेत्येवावक्ष्यत्।

---

शब्दरत्न

ऽन्याय्येति भावः। अनुत्पादादिति। अत एव तस्याः श्रवणं न। अभेदविवक्षापदार्थश्चार्थवत्सूत्रे निरूपयिष्यते। न च लिङ्गसर्वनामनपुंसकताभ्युपगमेनोत्पन्नाया विभक्तेर्लुक्। ह्रस्वापत्तेः। न च सुप्सुपेति समासेन निर्वाहः। इतिशब्दस्यस्वरूपशब्दपरता तात्पर्यग्राहकत्वेन तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात्। न च गोभ्यां गोक्षीरमित्याद्येकदेशगोशब्दानुकरणे "ऋलृक्" सूत्रभाष्योक्तेन "प्रकृतिवदनुकरणम्" इत्यतिदेशेन पदत्वं सुलभमिति वाच्यम्। "क्षियो दीर्घात्" (पा० सू० ८।२।४६) इति सूत्रभाष्योक्तेन तदतिदेशानित्यत्वेन तदप्रवृत्तिमाश्रित्यापि सुसाधत्वेनासाधारणप्रयोजनत्वाभावादिति भावः।

एतदर्थमेवेति। एतदर्थमपीत्यर्थः। अनितेः क्विपि सम्बुद्धावान् चिनोषीत्यत्र "नश्छवि" (पा० सू० ८।३।७) इति रुत्वे "अत्रानुनासिकः" (पा०सू०८।३।२) इति पूर्वस्यानुनासिके यदेतनांश्चिनोषि कमलँ आँश्चिनोषीत्यत्रापि फलसत्त्वात्। अवक्ष्यदिति। न चैवं न्यासे यथासंख्यापत्तिः। तस्यासार्वत्रिकत्वात्। "आन्महतः–"

---

तत्त्वाऽऽदर्शः

प्रकृतिवदनुकरणमिति। मानञ्चात्र 'क्षियोदीर्घा'दिति सूत्रे इयङ्निर्देशः। नचैवम् अनेन धातुत्वातिदेशे प्रातिपदिक संज्ञाभावेन तन्निबन्धनविभक्त्यादिकं न स्यात् इति वाच्यम्, तत्र प्रतिपदिकत्वनिमित्तकविभक्तिदर्शनेन तदतिदेशानित्यत्वज्ञापनात्।

न च सूत्रे दीर्घान्तानुकरणे दीर्घग्रहणवैयर्थ्यापत्तिः, ह्रस्वान्तानुकरणे 'विपराभ्यां जेः'रिति सूत्रवद्गुणापत्तिश्चेति वाच्यम् घिसंज्ञासूत्रे सखिशब्दसाहचर्येणानुकरणक्षिशब्दावयवेकारभिन्नस्यैव ग्रहणादस्य घित्वाभावेन गुणाऽप्राप्तेः।

"मय उञो वो वा" ( पा० सू० ८।३।३३ ) मयः परस्येति। परादिति तु प्राचः प्रमादः, "षष्ठीनिर्दिष्टस्य हि आदेशा उच्यन्ते" इति भाष्यात् आदेशविधौ स्थानिनः षष्ठ्या एव न्याय्यत्वाच्च। असिद्धत्वादिति। अत एवेदं वत्वं त्रिपाद्यां विधीयते। प्रकृतिभावमात्रबाधनार्थत्वे हि "इको यण्" ( पा० सू९ ६।१।७७) इत्यनन्तरं मय उञो वेत्येवावदयत्। यणं चान्ववर्त्तयिष्यत्। इह मय उञ इतौ परे अष्टाविंशतिरूपाणि। तथा हि—"उञः" इति प्रगृह्यत्वे किमु इति, वत्वपक्षे किम्विति। ऊँआदेशे किमूँ इति। आदेशस्य स्थानिवत्वेन "मय उञ —" ( पा० सू० ८।३।३३ ) इति प्रकृति-

---

शब्दरत्न

सू० ६।३।४६ ) इत्यादिनिर्देशाच्चेति भावः। पूर्वोक्ते कमलाँश्चिनोषीत्यत्र लस्य नकारापत्तिवारणाय विधेयकोटावनुनासिक इति। विधेयकोटौ यकारमारभ्य प्रत्याहारे तु विधेयविषये सवर्णग्रहणाभावेन पूर्वोक्ते निरनुनासिक लस्यैवापत्तिरिति यथान्यासमेव साधु।

---

तत्त्वाऽऽदर्शः

नुनासिकपदं यदेतदूँ इति, यदेतन्नूँ इति, एवमेव आन् चिनोषीत्यत्र नश्छवि इति रुत्वे 'अत्रानुनासिकः पूर्वस्य तु वे त्यनुनासिके 'यदेतनांश्चिनोषि', कमलआँश्चिनोषीत्यादौ अनुनासिकत्वार्थम्।

अन्यथा 'यरो ञमि ञम्वेति' सूत्रं पठेत्। एवञ्च ऊँ इति सूत्रेण सानुनासिकआदेशो भवतीति सिद्धम्।

नच न्यासकल्पे यथा संख्याऽऽपत्तिः स्यादिति वाच्यम्, आन्महतः समानाधिकरण जातीययोरित्यादि निर्देशैः स्वरितत्व विशिष्टे एव तत्प्रवृत्तेः।

ननु सूत्रे मूलोक्तफलसत्वेन निमित्त कोटावस्त्वनुनासिकपदम् विधेयकोटौ तदन्यर्थमेवेतिचेन्न, कमल आँ श्चिनोषीत्यत्र लकारस्य स्थाने नकारापत्तिवारणाय तदावश्यकत्वात्। नच चतुर्मुख इति प्रयोगेऽनुनासिकनिवृत्त्यर्थं भाष्यकृता अनुस्वारस्य ययि परसवर्ण इति सूत्रतः सवर्णपदानुवृत्तिरुक्ता, एवञ्च प्रकृतन्यासेऽपि तत्सम्बन्धस्यन्याय्यतया सावर्ण्याभावादेव न लकारस्य नकारापत्त्यसंभव इति वाच्यम्, न्यासे सवर्ण पदसम्बन्धे स्पर्शेतरवर्णसंग्राहकस्य यग्रहणस्य वैयर्थ्यापत्त्या सवर्णपदसम्बन्धस्य दुर्वचत्वात्।

भावापन्नादभूते आन्तरतम्यादनुनासिके वकारे किम्विति। अनुनासिका-ननुनासिकयोर्वकारयो "मयो यण" इति द्वित्वस्य मकारस्य "अनचि च" (पा० सू० ८।४।४७) इति द्वित्वस्य च विकल्पेन वत्वपक्षे रूपाष्टकम्।

---

शब्दरत्न

इत्येवावक्ष्यदिति। न चात्रापि न्यासे सन्निपातपरिभाषयाऽनुस्वाराप्राप्तिरिति वाच्यम्। त्रिपाद्यान्तथा पाठेन सन्निपातपरिभाषाऽनित्यत्वस्यापि ज्ञापनादिति भावः॥

अनुनासिके वकारे इति। इदं कैयटानुरोधेन। "मय उञः—" (पा०सू० ८।३।३३) इत्यत्र विधीयमानस्य सवर्णग्राहकत्वाभावेनानेन सानुनासिकविधाना-भावेन कथमत्र सः। अन्यथेदमो मस्यानुनासिकोऽकारः स्यात्। अत एवेदृशे विषये गुणानामभेदकत्वपक्षानाश्रयणमिति चिन्त्यम्।

इत्यच्सन्धिः।

---

तत्त्वाऽऽदर्शः

सन्निपातपरिभाषयेति—सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषा-स्वरूपम्। सन्निपातो द्वयोः सम्बन्धस्तन्निमित्तो यो विधिस्तं सन्निपातं यो विहन्ति तस्यानिमित्तमिति परिभाषार्थः, उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा। फल-ञ्चास्याः शतानीत्यादिलक्ष्ये नुमिकृते षट्संज्ञायां षड्भ्योलुगिति लुक् नेति। अत्र केचित्—ज्ञापक सिद्धेयं परिभाषा, ज्ञापकञ्चात्र नतिसृचतसृइति सूत्रम्, तद्धि तिसृणा-मित्यादि लक्ष्ये दीर्घाभावाय, एतत्परिभाषाऽभावे तिसृनामित्यवस्थायामन्तरङ्गत्वा-द्दन्तलक्षणे ङीपि दीर्घस्यानुपयोगादेवाप्राप्तौ तद्वैयर्थ्यापत्तिः, ज्ञापितायान्तस्यां विभक्त्यानन्तर्यनिमित्तकस्य तिसृभावस्य तद्विघातकं ङीपं प्रत्यनिमित्तत्वेन तदप्रवृत्त्या दीर्घवारणार्थं सूत्रसार्थक्यं स्पष्टमेव। नचात्र 'नषडिति' निषेधः शङ्क्यः, 'कृन्मेजन्त' इति सूत्रस्थ भाष्यप्रामाण्येन स्वस्रादिगणे तिसृचतसृशब्दपाठस्यानार्षत्वात्।

नच तिसृचतसृशब्दाभ्यां ङीपि 'अत्यादय' इति अतिशब्देन समासे गोस्त्रियो-रिति ह्रस्वे नामीति प्राप्तदीर्घवारणाय निषेधस्य सार्थकत्वात्कथं ज्ञापकत्वमिति वाच्यम्, अतितिस्रीनामिति स्थिते प्रतिपदोक्तत्वरूपान्तरङ्गत्वेन नित्यत्वेनचोभयोः ह्रस्वदीर्घयोः समत्वेन परत्वाद्दीर्घोत्तरं ह्रस्वे लक्ष्येलक्षणन्यायेन पुनर्दीर्घाप्राप्त्या निषेधसूत्रस्य

तदभावे द्वयमिति दशकम्। प्रगृह्यसञ्ज्ञाविरहपक्षे "मय उञ-" (पा० सू० ८।३।३३) इति वत्वस्यासिद्धत्वात् "इको यण्-" (पा० सू० ६।१।७७) इति यणैव तस्य सिद्धत्वान्मोऽनुस्वारे "वा पदान्तस्य" (पा० सू० ८।४।५९) इति परसवर्णपक्षे अनुनासिकाननुनासिकवकारद्वयोपेतमेकादशं रूपम्। अनुनासिकस्य द्वित्वे "हलो यमाम्" (पा० सू० ८।४।६५) इति लोपस्य वैकल्पिकत्वादकरणे त्रिवकारं द्वादशं रूपम्। परसवर्णाभावपक्षे अनुस्वारस्य यत्वोत्पादिके द्वित्वे द्वे। संकलनया चतुर्दश। इति शब्देकारस्य "अणोऽप्रगृह्यस्य—" (पा० सू० ८।४।५७) इत्यनुनासिकविकल्पादष्टाविंशतिरिति।

* इत्यच्सन्धिः *

---

तत्त्वाऽऽदर्शः.

वैयर्थ्येन ज्ञापकत्वस्य सुस्थत्वात्। परिभाषाऽनित्यत्वस्यापीति—ज्ञापकसिद्धानां वचनानां ज्ञापकदेशीयता या निर्विवादत्वेन प्रकृतपरिभाषादृष्ट्या विघातकविधेरसिद्धतया प्रवृत्त्ययोगादनित्यज्ञापनमयुक्तमेव, आवश्यकश्च त्रिपाद्यांपरिभाषाप्रवृत्त्यभावः, अतएव च 'सञ्छम्भु' रित्यादि लक्ष्ये शवर्णानन्तर्यनिमित्तकत्वेन प्रवृत्तस्य तुगागमस्य तद्विघातकछादेशनिमित्तत्वसम्भवः, परिभाषाऽनित्यत्वेन तत्समर्थनन्तु न युक्तम्, दोषाः खल्वपिसाकल्येन परिगणिता इति भाष्यकारैरुपपादनेनैवंविधानां दोषाणां भाष्ये परिभाषादोषेषु परिगणनाभावात्।

गुरवस्तु। सञ्छम्भुरित्यादि, परिभाषाऽनित्यत्वेनैव साधनीयम्, दोषाः खल्वपिसाकल्येन परिगणिता इत्यादि न भाष्यविरोधः 'हलोऽनन्तराः संयोग' इत्यादि सूत्रनिर्देशैः, 'गवाक्ष' इत्यादि भाष्योदाहरणैः 'इतोऽन्यत्र प्रवृत्तिरेवेति नागेशभट्टनिर्देशैश्च संहिताकार्यविषये एतत्परिभाषाया अप्रवृत्तेरवश्याभ्युपेयत्वात्, परिगणितातिरिक्तविषये नियमेन परिभाषायाः प्रवृत्तिस्वीकारे गवाक्ष इत्याद्यसिद्धिर्दुर्वारैवेत्याहुः।

इति अच्सन्धिप्रकरणं समाप्तम्।

—:०:—

# अथ हल्सन्धिप्रकरणम् ।

"स्तोः श्चुना" ( पा० सू० ८।४।४० ) स्तोरिति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । श्चुनेति । "सह युक्ते–" इति सूत्रे विनापि तद्योगं तृतीयेति वक्ष्यते । योग इत्येतदध्याहारलभ्यम् । अत्र स्थान्यादेशयोर्यथासंख्यं, निमित्तकार्यिणोस्तु न । "शात्" ( पा० सू० ८।४।४४ ) इति ज्ञापकात् ।

---

शब्दरत्न

विनापि तद्योगमिति । साहित्यं च योगक्रियायाम् । एतदिति । संयोग इति तदर्थः । सत्या भामेतिवन्निर्देशः । संयोगश्चाव्यवहितयोरेवेति चितं कटु तैलमित्यादौ न दोषः । यथासंख्यमिति । तथदधनेत्यादेरप्यनादितया तमादाय "परस्मैपदानां णल्" ( पा० सू० ३।४।८४ ) इत्यादौ सूत्रान्तरस्थक्रमेणैव यथासंख्यमिति भावः ।

---

तत्त्वाऽऽदर्शः

स्तोरिति । अत्र साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य द्वन्द्वसाधुत्वम् । अथवा स् इति श् इति च लुप्त विभक्तिके भिन्ने पदे इति ज्ञेयम् । विनापीति । अयं भावः, 'सहयुक्तेऽप्रधाने' इति सूत्रे तद्योगं विनापि तृतीया भवति । मानञ्चात्र—'वृद्धोयूना तल्लक्षणश्चेदेव विशेष' इति सूत्रनिर्देशः ।

योग इति । योग इत्यस्य संयोग इत्यर्थः । सत्या, भामेतिवन्निर्देशः । संयोगश्चाव्यवहितयोरेव, अतएव 'चितं कटु तैल' मित्यत्र न दोषः । क्वाचित्कं वाक्यमेतत् । केचित्तु—'तयोर्य्वावचिसंहितायाम्' इति सूत्रे संहितापदमष्टमाध्याय परिसमाप्त्यधिक्रियत इति राद्धान्ताद् व्यवधाने श्चुत्वाप्राप्तिरेवेत्याहुः ।

ज्ञापकादिति । अयंभावः—स्तोरिति सूत्रे यदि निमित्त कार्यिणोः यथासंख्यं भवेत्, तदा 'विश्नः' इत्यत्र तदप्राप्त्या 'शात्' इति सूत्रं व्यर्थं स्यात् । एतेन च स्वरितत्वोपलक्षिते एव यथासंख्य सूत्रप्रवृत्तिः, प्रकृते तदभावान्न यथासंख्य सूत्र प्रवृत्तिः । अतएव च 'ङसिङसोश्चे'ति सूत्रेऽपि न तत्प्रवृत्तिरिति बोध्यम् । नच विश्नशब्दाण्णिजन्तात् क्विपि 'विश्न् चकारे' त्यत्र प्राप्तश्चुत्वस्य निषेधार्थं सूत्रावश्यकत्वेन ज्ञापकत्वासम्भव इति वाच्यम्, ज्ञापनात्पूर्वं यथासंख्य सूत्रप्रवृत्त्या चकारादि योगे नकारस्य श्चुत्वप्राप्तिरेवनेति तदुदाहरणासंभवात् । नच विश्नञ्ङुवे इति

"अल्पाच्तरम्" ( पा० सू० २।२।३४ ) इत्यादौ तु सौत्रत्वात् श्चुत्वं न। तज्ज्ञानमित्यादौ तु भवत्येव। स्तोः श्चौ श्चुरिति सुवचम्। न च "तस्मिन्निति निर्दिष्टे-" पा० सू० १।१।६६ ) इति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिध्येत्। "शात्" ( पा० सू० ८।४।४४ ) इति लिङ्गेन तस्या इहानुपस्थानात्।

"ष्टुना" ( पा० सू० ८।४।४१ ) इहापि कार्यिनिमित्तयोर्यथासंख्यं न। "तोषि" (पा०सू० ८।४।४३) इति ज्ञापकात्। ष्टौ ष्टुरिति सुवचम्। ईट्टे, इण्टे, इत्यादौ "न पदान्तात्-" (पा० सू० ८।४।४२) इति ज्ञापकान्न दोषः। सर्पिष्टमसिति। "ह्रस्वात्तादौ-" ( पा० सू० ८।३।१०१ ) इति षत्वम्।

'प्रत्यये भाषायाम्' इति। यत्तु प्राचा मयटि नित्यमिति पठितम्। यच्च हलन्तप्रकरणे षण्णां, षड्णामित्युदाहृतम्। यच्च "यरोऽनुनासिक-" (पा०

---

शब्दरत्न

च्चादिशब्दैश्चानादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितिरिति तात्पर्यम्। ननु तज्ज्ञानमित्यादौ श्चुयोगाभावान्न स्यादत आह—तज्ज्ञानमिति। जत्रयोगे तथोच्चारणमात्रं न त्विदं वर्णान्तरमिति भावः। अनुपस्थानेति। पूर्वत्वांशानुपस्थानेत्यर्थः। तेन चितमित्यादौ न दोषः।

षत्वमिति। न च षस्य पदान्ते जश्त्वं भविष्यतीति तद्व्यर्थमिति वाच्यम्। षत्वस्यासिद्धत्वेनास्य जश्त्वाभावात्।

---

तत्त्वाऽऽदर्शः

तदुदाहरणसम्भव इति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्यात् 'विश्न्' इत्यस्यानभिधानात्। 'अल्पाच्तरम्' इत्यत्र च सौत्रत्वान्न श्चुत्वमिति बोध्यम्।

षत्वस्यासिद्धत्वेनेति। नच सकारस्यैव षत्व प्रवृत्तिवेलायां षत्वासिद्धत्वेन जश्त्वं किन्नस्यादिति वाच्यम्, 'विसर्जनीयस्य स' इति विहित सत्वस्याप्यसिद्धत्वात्। प्राथमिक सकारबुद्ध्या तु न तत्प्रवृत्तिः, स्वापवादभूतेन रुत्वेन बाधात्। नच षत्वं रुत्वापवाद इति तदंशे रुत्वा प्रवृत्त्या षत्वासिद्धत्वेन जश्त्वं दुर्वारमिति वाच्यम्, रुत्वविसर्गयो 'विसर्जनीयस्य स' इति विहित सकारस्य षत्वसम्पादनेन कृतार्थस्य षत्वविधेस्तदपवादत्वायोगात्।

सू० ८।४।४५) इति वा ऽनुनासिक इति तत्र व्याख्यातं, तत्सर्वं भाष्यविरोधादुपेक्ष्यम्। यवादिगण इति। "यचि भं तसौ मत्वर्थे" इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम्।

"उदः स्था-" (पा० सू० ८।४।६१) "अनुस्वारस्य ययि-" (पा० सू० ८।४।५८) इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते। एकदेशे स्वरितत्वप्रतिज्ञानादित्याशयेनाह—पूर्वसवर्णः स्यादिति। अघोषस्येत्यादि। एतेन सस्थ तकार इति प्राचां ग्रन्थाः प्रत्युक्ताः। यदपीह "चयो द्वितीयाः शरि" इत्यस्योपन्यसनं तदतिरभसात्।

---

शब्दरत्न

भाष्येति। प्रत्यय इत्येव तत्र पाठादिति भावः। दकारमिति। चर्त्वेनेति भावः। मृच्छब्दस्य यवादिगणे पाठे न मानमिति तत्र "झयः" (पा० सू० ८।२।१०) इति वत्वे मृद्वानित्येवेति तात्पर्यमिति केचित्, तत्र मृन्मानित्यस्यासिद्ध्यापत्तेः। मृद्वानिति क्वाचित्कोऽसांप्रदायिकः पाठः।

ननु सवर्णपदमधिकं "परसवर्णः" इत्यत्रैकार्थीभावापन्नस्यान्यत्र सम्बन्धो वक्तुमशक्यः। न च पूर्वस्येत्यस्य सम्बन्ध्याकाङ्क्षायां यत्किञ्चित्सम्बन्धिकल्पनापेक्षया पूर्वत्रोपस्थितार्थवाचकपदाध्याहारौचित्यात्तल्लाभः। "चुटू" (पा०सू० १।३।७) इत्यादावादेरप्येवमेव सम्बन्धोपपत्तौ तत्र तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः। न च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः। "तोर्लि" (पा० सू० ८।४।६०) इत्यत्र समुदायानुवृत्त्या तस्याश्चारितार्थ्यादित्यत आह— अनुस्वारस्येत्यादि। एकदेशे इति च। पकारमात्रे स्वरितत्वप्रतिज्ञयैव "तोर्लि" (पा० सू० ८।४।६३) इत्यादावनुवृत्तिसिद्धौ पुनः सकारांशे तत्प्रतिज्ञया तावतोऽप्यंशस्य उत्तरत्रानुवृत्तिरिति भावः। तदतिरभसादिति। चयोऽभावात्। "दीर्घादाचार्याणाम्" (पा० सू० ८।४।५२) इत्युत्तरं "अनुस्वारस्य ययि" (पा० सू० ८।४।५८) "वा पदान्तस्य" (पा० सू० ८।४।५९) "तोर्लि" (पा० सू० ८।४।६०) "उदः स्था" (पा० सू० ८।४।६१) "झयो हः" (पा० सू० ८।४।६२) "शश्छोऽटि" (पा० सू० ८।४।६३) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" (पा० सू० ८।४।५३) "अभ्यासे चर्च" (पा० सू० ८।४।५४) "खरि च" (पा० सू० ८।४।५५) "वा ऽवसाने" (पा० सू० ८।४।

तच्छिव इति। यत्तु प्राचा तत् शिव इत्यत्र जश्त्वे कृते "खरि च" (पा० सू० ८।४।५५) इत्युक्तम्। तन्न। तदो दान्तत्वेन जश्त्वोपन्यासवैयर्थ्यात्। यत्तु—तत्पौत्रेणोक्तं तदो "वाऽवसाने" (पा० सू० ८।४।५६) इति चर्त्वे कृते पश्चाच्छिव इत्यनेन सम्बन्धे "झलां जशोऽन्ते" (पा० सू० ८।२।३९) इति जश्त्वे "खरि च" (पा० सू० ८।४।५५) इति चर्त्वमिति तदतिस्थवीयः। जश्त्वं प्रति अवसाने चर्त्वस्यापवादत्वात्। जश्त्वे शिवशब्दानपेक्षणाच्च। भाविन्यवसानभंगे "वाऽवसाने" (पा० सू० ८।४।५६)

---

शब्दरत्न

५६) "अणोऽप्रगृह्यस्य" (पा० सू० ८।४।५७) इति पञ्चसूत्र्याः पाठे भाष्यसम्मते थस्य चर्त्वेऽपि तस्यासिद्धत्वाच्छपरत्वाभावाच्चेति भावः।

चर्त्वमिति। ततः श्चुत्वे "शश्छोऽटि" (पा० सू० ८।४।६३) इति प्रक्रियेति भावः। चर्त्वस्यापवादत्वादिति। एवं च तत्र कृते जश्त्वाप्रवृत्तिरिति भावः। न च जश्त्वे कृते चर्त्वस्य चारितार्थ्येन तस्यासिद्धत्वादपवादत्वे न मानमिति वाच्यम्। तत्कालेऽवश्यं प्राप्तत्वेन येन नाप्राप्तिन्यायेनापवादत्वस्य सुलभतयोक्तरीतेरसम्भवात्। एतदेवाभिप्रेत्य "मिदचोऽन्त्यात्" (पा० सू० १।१।४७) सूत्रे भाष्ये उक्तम्—

---

तत्त्वाऽऽदर्शः

उक्तरीतेरिति। अपवादभूतावसानिकचर्त्वं प्रवृत्त्युत्तरं जश्त्वप्रवृत्तिरीतेरित्यर्थः। अत्रेदमाकूतम्—तदप्राप्तियोगे विषयेऽचारितार्थ्यमपवादत्वबीजन्तदिहास्त्येवेत्यर्थः। अत्रेदमाकूतम्—विशेषशास्त्रेण सामान्यशास्त्रस्य बाधो द्वेधा। सर्वथा निरवकाशत्वेन, उपसर्गप्राप्तिकालिक तदप्राप्तियोग्य लक्ष्यशून्यत्वेन च। तत्र 'सर्वेब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामित्यत्र भोजनकाले भोजनोत्तरञ्चानुपपन्नतया सर्वथा निरवकाशत्वेन परिवेषणेन भोजनस्येव यत्रबाधः, यथा ङेराम्नद्याम्नीभ्य' इत्यनेन 'याडाप' इत्यस्य, नहि कृते याटि आमः प्रवृत्तिकालेऽप्यनुपपत्तिरेव, यौगपद्यासम्भवात्। तत्र परिवेषणोत्तरं भोजनवत् सर्वथा निरवकाशत्वेन बाधितस्य याटो बाधकप्रवृत्त्युत्तरमुत्सर्गस्य सति संभवे भवत्येव प्रवृत्तिः यत्र तु सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र दधिदानोत्तरं प्राप्तियोग्यतया चरितार्थेनापि तक्रदानेन दधिदानस्ये-

इत्यस्य पूर्वमप्रवृत्तेश्च। प्रवृत्तस्य वा निवृत्तिसम्भवात्। उक्तं च "अकृतव्यूहाः पाणिनीयाः" इति "कृतमपि शास्त्रं निवर्तयन्ति" इति च। अन्यथा हरिरयमित्यत्रापि त्वदुक्तरीत्या प्रवृत्तो विसर्गः केन वार्यताम्। अथ तनोतीति तदिति क्विबन्तं ब्रूषे, एवमपि जश्त्वेन दकारोऽस्तु। चर्त्वे कृते श्चुत्वमिति तु न न्याय्यम्। श्चुत्वं प्रति चर्त्वस्यासिद्धत्वात्।

---

शब्दरत्न

सत्यपि सम्भवे बाधनं भवतीति। अन्यथा कौण्डिन्याय तक्रमित्यनेन ब्राह्मणेभ्यो दधीति प्राप्तदधिदानस्यापि बाधो न स्यात्। तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यात्। अत एव "अजादेर्द्वितीयस्य" (पा० सू० ६।१।२) इति सूत्रे प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्वचनस्थानेन बाधो न स्यादित्याशङ्क्य सत्यपि सम्भवे इति न्यायेन बाधकत्वमुक्तं भाष्ये। एवं च "दयतेर्दिगि-" (पा० सू० ७।४।९) इति सूत्रस्थकैयटादिग्रन्था 'असम्भवे एव बाधकता' इति वार्तिकानुसारेण प्रवृत्ता अयुक्ता एवेति बोध्यमिति भावः। केनवार्यतामिति। एवं चेद्दशविषये वाक्यसंस्कारपक्षेणैव साधुत्वान्वाख्यानमिति स्वीकृत्याकृतव्यूहपरिभाषा त्याज्येति-चेदिष्टापत्तिरिति बोध्यम्।

---

तत्त्वाऽऽदर्शः

वोत्सर्गप्रवृत्त्युत्तरकालिकचारितार्थ्योपहितेन तत्प्रवृत्तिकालिकतदप्रवृत्तियोग्यलक्ष्यशून्यत्वेन बाधः। यथा 'दयतेर्दिगि लिटी' त्यनेन 'लिटिधातोरनभ्यासस्येत्यस्य। तत्र हि—द्वित्वोत्तरमुत्तरखण्डे प्रवृत्त्या सत्यपिचारितार्थ्ये द्वित्वप्रवृत्तिकालिकद्वित्वाप्रवृत्तियोग्य स्वप्रवृत्तिविषयलक्ष्यशून्यतया दिग्यादेशेन द्वित्वस्य बाधः, तत्र तक्रदानोत्तरं पुनरुत्सर्गस्याऽप्रवृत्तिः, एवञ्च तक्रकौण्डिन्यन्यायप्रयुक्तचारितार्थ्यमूलक बाधकत्वोपहितेनावसानिकचर्त्वेन बाधितस्य जश्त्वस्य पुनः प्रवृत्तिर्न संभवतीति सूचयति—एतदेवाभिप्रेत्येत्यादिना।

वाक्यसंस्कारपक्षेणैवेति। लक्ष्यानुरोधेन पक्षयोर्व्यवस्थितत्वात्। पदसंस्कारपक्षोऽत्र न दोषाधायक इति भावः। यदकृतव्यूहपरिभाषया साध्यं तद्वाक्यसंस्कारेणैव साधनीयम्, पदसंस्कारस्तत्र त्याज्यः। तथाच—प्राचीनोक्तं 'वावसाने' इति चर्त्वे कृते इत्यादिना यत्तदसङ्गतमेवेति भावः। पदसंस्कारपक्षमवलम्ब्यादौ विसर्ग

यत्तु–"न मु ने" (पा० सू० ८।३।३) इत्यत्र "न" इति योगं विभज्या-सिद्धत्वमिह नेत्याहुः। तदपि न। असिद्धत्वेऽपि रूपसिद्धौ निर्बाधायां योगविभागस्यागतिकगतिभूतस्येहाश्रयणे प्रमाणाभावात्।

आक्रंस्यत इति। "आङ उद्गमने" (पा० सू० १।३।४०) इति तङ्। "स्नुक्रमोः–" (पा० सू० ७।२।३६) इति नेट्।

सप्तसम्बन्धो विधिरिति। सप्तकर्मकं विधानमिति तु नोक्तम्। अनु-वाद्ययोरपि यथासंख्यस्येष्टत्वात्। "समूलाकृतजीवेषु हन्कृञ्ग्रहः" (पा० सू० ३।४।४३) इत्यत्र यथा।

"ङ्णोः" (पा० सू० ८।३।२८) कुक्टुकोः पूर्वान्तत्वात्प्राङ्क्साये इत्यत्र "सात्पदाद्योः" इति षत्वं न। सुगण्ट्साये इत्यत्र "न पदान्तात्" (पा० सू० ८।४।४२) इति ष्टुत्वं न।

पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् तस्यापत्यं पौष्करसादिरा-चार्यः। बाह्वादित्वादिञ्। अनुशतिकादित्वादुभयपदवृद्धिः।

"डः सि धुट्" (पा० सू० ८।३।२९) "उभयनिर्देशे पञ्चमीनिर्देशो

---

शब्दरत्न

अन्ये तु पदसंस्कारे हरिः अस्तीति सविसर्गमपि साध्वेव सत्यभिधाने, परिभा-षाया भाष्येऽदर्शनादित्याहुः। प्रमाणाभावादिति। योगविभागस्य भाष्ये ऽदर्शनेना-प्रामाणिकत्वाच्चेत्यपि बोध्यम्।

यथासंख्यस्येति। ख्यान्तैकदेशेन सूत्रस्य ग्रहणं बोध्यम्।

---

तत्त्वाऽऽदर्शः

कृत्वा पश्चात्तिङन्तसम्बन्धः कार्य इत्यभिप्रायेण सविसर्गरूपमपि साधुरिति कैश्चिदुक्तं तन्मतमाह—

अन्येत्वित्यादिना। अत्रारुचिबीजं तु—प्रागुपदर्शित 'विसर्जनीयस्य स' इति सूत्रस्य भाष्यविरोधः। अथवा—एतादृशरूपानभिधानमेवेति बोध्यम्।

डःसिधुडिति। परत्वात् 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायसिद्ध-परिभाषया डकारात्परस्य सस्य धुडिति सूत्रार्थः। ननु अस्मिन् सूत्रे सप्तमीनिर्देशस्यैव

बलीयान्, परत्वात्" इत्यभिप्रेत्याह—सस्येति। सीति सप्तमीनिर्देशस्तु लाघवार्थः। षट्त्सन्त इति। धुटश्चर्त्वेन तकारः।

यत्त्वाहुः—"चयो द्वितीया" इति पक्षे तस्य थ इति तन्न। चर्त्वस्यासिद्धत्वात्। अत एव धुडभावे षट् सन्त इत्यत्र टस्य ठो न। टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश। 'खयः शर" इति सकारद्वित्वे द्वात्रिंशत्। न च तत्र चर्त्वस्यासिद्धत्वं शङ्क्यम्। "पूर्वत्रासिद्धीयमद्वित्वे"

---

शब्दरत्न

परत्वादिति। "तस्मिन् (पा० सू० १।१।६६) इति सूत्रापेक्षया "तस्मात्—" (पा०सू० १।१।६७) इत्यस्य परत्वादित्यर्थः। डकारात्सकारे धुडित्यर्थे "तस्मिन् –" (पा० सू० १।१।६६) इत्यस्य प्रवृत्तावुपस्थितडकारस्यागमित्वं, "तस्मात्—" इत्यस्य प्रवृत्तावुपस्थितसस्य तत्त्वमित्यसम्भवरूपविरोधे परत्वेन व्यवस्थेति सस्यागमित्वनिर्णय इति भावः। स्पष्टं चेदं "तस्मिन्" (पा० सू० १।१।६६) इति सूत्रे भाष्ये। लाघवार्थ इति। षष्ठ्याः प्रयोग एव कर्त्तव्ये इत्यर्थः।

चर्त्वस्यासिद्धत्वादिति। अत एव तुडिति नोक्तम्। अत एव—चर्त्वस्यासिद्धत्वादेव।

---

तत्त्वाऽऽदर्शः

परत्वेन परत्वात् पञ्चमीनिर्देशो बलीयानिति कथनमसङ्गतमितिचेन्न, तस्मिन्निति सूत्रापेक्षया तस्मादित्यस्य परत्वादिति तदाशयात्। परिभाषाविषये कार्यकालपक्षेऽपि पाठकृतपरत्वमेव नियामकं नतु संज्ञाशास्त्रवत् प्रदेशीयं, साधकाभावात्। किञ्च-भाष्यकृता 'अधिकारो नाम त्रिप्रकारः, कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति' इत्यभिहितम्। अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते। कश्चित्परिभाषारूप इति व्याख्या च कैयटेन कृता। तेनाष्टाध्यायीपाठएव तद्विषये नियामक इत्यभिहितम्। यथा प्रदीपः सर्वं वेश्माभिज्वलयतीत्येकः। द्वितीयः, यथा रज्ज्वायसा वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेणेति चकारमन्तरापि योगे योगे उपतिष्ठत इति। तृतीयोऽङ्गस्येति सूत्ररूपः। अधिकारत्वञ्च स्वदेशे लक्ष्यधर्मिक साधुत्वप्रकारक शाब्दबोधाजनकत्वे सति विधिवाक्यैकवाक्यतयाऽर्थबोधजनकत्वम्।

इत्युक्तेः। नच "शरोऽचि" (पा० सू० ८।४।४९) इति द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयकत्वात्। अतएव "शरः खयः" इति वार्तिकस्य वत्सः, अप्सराः, इत्युदाहरणं भाष्ये स्थितम्। धुटः परादित्वं "न पदान्तात्-" (पा० सू० ८।४।४२) इति ष्टुत्वनिषेधार्थम। अतएव वक्ष्यमाणस्तुगिहैव न कृतः।

यत्त्वाहुः—एवमपि प्रक्रियालाघवार्थं तुडेव कर्तुमुचित इति तन्न। "चयो द्वितीया–" इति पक्षे थकारापत्तेः। "श्चुत्वं धुटि सिद्धं वाच्यम्" अटतीत्यट् श्चोतति। इह धुड् न।

"शि तुक्" (पा० सू० ८।३।३१) शीति सप्तमी पूर्वत्र कृतार्थायाः "नः" इति पञ्चम्याः षष्ठीं कल्पयतीत्याह—नस्येति। ननु प्रकृतो धुडेवास्तु किं तुका। मैवम्। "शश्छोऽटि" (पा० सू० ८।४।६३) इत्यस्य हि पदान्ताज्झयः परस्य शस्य छ इत्यर्थं आकारे स्थितः। एवं च धुटः परादित्वात् सञ्छम्भुरित्यत्र च्छो न स्यात्। विपूर्वाद्रपेरौणादिके शप्रत्यये "मध्वश्चोतन्त्यभितो विरप्शम्" इत्यादौ यथा। अतः पूर्वान्तस्तुक् कृतः।

---

शब्दरत्न

ननु 'धुक् डः सि' इत्यत्तु सप्तमी च यथाश्रुतैव, ड इति च षष्ठ्यन्तं, परमार्थतो वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे परादित्वे वा न शक्ततावच्छेदकभेदोऽत आह — धुटः परादित्वमिति। श्चोततीत्यत्र सादिः। श्चुत्वस्य धुटि सिद्धत्वे ऽपि तुक्यसिद्धत्वात्सन् श्चोततीत्यत्र तुग्नेति बोध्यम्।

षष्ठीं कल्पयतीति। न च "शि" इति सप्तमीनिर्देशो लाघवार्थः। द्वयोरचरितार्थत्वे लाघवेनान्यविभक्त्युच्चारणं युक्तं न त्वन्यथेत्याशयात्। धुडेवास्त्विति। शीति च षष्ठ्यर्थे इति भावः। विरप्शमिति। छान्दसार्थमपि बहुशः सूत्रकृतो यत्नदर्शना-

---

तत्त्वाऽऽदर्शः

विरप्शमिति। अयंभावः—'शितुक्' इति सूत्रे तुग्ग्रहणं न कर्तव्यम्, प्रकृतोधुडेवस्तु, नैतद्युक्तम्, 'शश्छोटी'ति सूत्रस्य पदान्ताज्झयः परस्य छ इति भाष्यस्थार्थसत्वात् धुटः परादित्वेन सञ्छम्भुरित्यत्र छत्वानुपपत्तेः, यथा विपूर्वाद्रपेरौणा-

नन्वेवं कुर्वञ्च्छेते इत्यत्र "पदान्तस्य" (पा० सू० ८।४।३७) इति णत्वनिषेधो न स्यादिति चेन्न। कार्यकालपक्षे बहिरङ्गत्वेन तुकोऽसिद्धत्वात्। यथोद्देशपक्षे "स्तोःश्चुना" इति योगो विभज्यते 'न' इति वर्तते 'णः' इति च। स्तोः श्चुना योगे णत्वं न स्यात्। नकारार्थमिदम्। स्कारग्रहणं वर्गग्रहणं चोत्तरार्थम्। ततः "श्चुः" इति पूर्वमनुवर्तते। एवं "नश्च" (पा० सू० ८।३।३०) इति सूत्रे कुर्वन्त्सीदतीत्यत्र "पदान्तस्य" (पा० सू० ८।४।३७) इति णत्वप्रतिषेधो धुटः परादित्वे प्रयोजनमिति प्राचां ग्रन्थोऽपि यथोद्देशपक्षे बोध्यः।

---

शब्दरत्न

दिति भावः। णत्वं न स्यादिति। एतत्दृष्ट्या श्चुत्वस्यासिद्धत्वं तु न, वचनसामर्थ्यादिति भावः। त्रिपाद्यां सर्वथा परिभाषाऽप्रवृत्तौ पक्षद्वयेऽपीदमेव समाधानम्। यथोद्देशपक्षे इति। कार्यकाले तु असिद्धत्वान्न दोषः पूर्वान्तत्वेऽपीति भावः।

---

तत्त्वाऽऽदर्शः

दिके शप्रत्यये विरप्शमिति प्रयोगे छत्वं न भवतीति। नच छान्दसत्वादेव तत्र छत्वं नभविष्यतीति वाच्यम्, लोकेऽपि 'चक्षिङ् व्यक्तायां वाचि' इति धातोः लिटि 'चक्शौ' 'चक्शे' इत्यादिषु छत्वाभावाय सूत्रे पदान्तसम्बन्धस्यावश्यकत्वात्। वस्तुतस्तु—ख्शादेशे प्रक्रियालाघवाय छकारएवोच्चारणीये शकारोच्चारणेन छत्वस्य वारयितुं शक्यत्वेन नेदं सूत्रे पदान्तादित्यनुवृत्तेरसाधारणं फलम्। अतएव मनोरमाकृतः छान्दसोदाहरणपर्यन्तानुधावनं सङ्गच्छत 'इति बोध्यम्। वचनसामर्थ्यादिति। ननु 'हे प्राण्चरसी'त्यत्र 'अन्तः इति सूत्रेणानितेः प्रवर्तमानस्य णत्वस्य निषेधार्थन्तदावश्यकत्वेन कथन्तत्सामर्थ्यमितिचेन्न, श्चुनेत्यनेन श्चुशब्देन भावितस्यैव ग्रहणं नतु स्वतःसिद्धचकारादेरित्यर्थकल्पनेन तद्युक्तत्वात्। नच श्चोततेरुपदेशेसादित्वेन श्चुत्वनिष्पन्नशकारघटिते 'प्राण्श्चोतती'त्यत्र दोषतादवस्थ्यमेवेति वाच्यम्, योगविभागादिष्टसिद्धिरितिन्यायएवात्र शरणम्। इष्टसिद्धिरेव, नत्वनिष्टापादानमिति तदर्थात्। सर्वथेति। अयंभावः, नव्यमते उभयोरपि पक्षयोः त्रिपाद्यां बहिरङ्गपरिभाषा न प्रवर्तते, इति पक्षद्वयेऽपीदमेव समाधानं युक्तम्। एतेन यत्तुवदन्तीत्यादिना यदभिहितन्तन्नयुक्तमिति ध्वनितम्।

यत्तु वदन्ति–इदं प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात्प्रत्युक्तमिति। तत्पाक्षिकम्। त्रिपादीस्थेऽन्तरङ्गे बहिरङ्गपरिभाषेयं न प्रवर्तते इति सुद्ध्युपास्य इत्युदाहरणे स्वोक्त्या सह विरुद्धं चेत्यास्तां तावत्। सञ्च्छम्भुरिति। इह श्चुत्वतुकोरसिद्धतामाश्रित्य "नश्छवि" (पा० सू० ८।३।७) इति रुत्वं न शङ्कयम्। छत्वस्यासिद्धत्वात्।

"ङमो ह्रस्वात्" (पा० सू० ८।३।३२) ङम् प्रत्याहारः। सञ्ज्ञायां च कृतं टित्वं सामर्थ्यात् संज्ञिभिः सम्बद्धयते। तेन यथासंख्यं ङुट्–णुट्–नुटः प्रवर्तन्ते। नित्यग्रहणं विस्पष्टार्थम्। "हे मपरेवा–" (पा०सू० ८।३।२६) इति "मय उञो वो वा" (पा० सू० ८।३।३३) इति च विकल्पद्वयस्य मद्ध्ये पाठादेव नित्यत्वलाभात्। सुगण्णीश इति। णत्वल्लोपौ न स्थानिव-

---

शब्दरत्न

सञ्ज्ञायाम्—ङमिति प्रत्याहाररूपायाम्। विकल्पद्वयस्य मद्ध्ये इति। 'विभाषामध्ये च ये विधयस्ते नित्या' इति "पूङः क्त्वा च" (पा० सू० १।२।२२) इति सूत्रे भाष्योक्तेरिति भावः। न च तन्मध्ये पाठेन नित्यत्वकल्पने तन्मध्यपतितानां "नपरे नः" (पा० सू० ८।३।२७) इत्यादीनामपि नित्यत्वापत्तिः। स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां त्वानन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाभावात्। तस्मादुत्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव वाग्रणस्य निवृत्ति-

---

तत्त्वाऽऽदर्शः

विभाषामध्येइति। विकल्पविषयविधिद्वयमध्ये इत्यर्थः। भाष्योक्तेरिति। 'पूङःक्त्वाच पा०सू० १।२।२२ इति सूत्रे भाष्ये 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' पा०सू० १।२।२१ इत्यतो विकल्पानुवृत्तिमाशङ्क्य 'नित्यमकित्वमिडाद्योरिति' भारद्वाजीयमतमनुसृत्य 'उदुपधादभावादि कर्मणोरन्यतरस्याम्'। 'नोपधात्थफान्ताद्वेति' विभाषाद्वयमध्ये पाठादन्यतरस्यामित्यस्यासम्बन्धो विभाषामध्ये च ये विधयस्तेनित्यास्तेन पूङः परौ सेटौ क्त्वानिष्ठाप्रत्ययौ नित्यमेवकितौ नेत्युक्तमिति बोध्यम्। मू० सुगण्णीशइति। ननु 'सुगण्णीश' इत्यत्र ङमुटः परविधित्वेन स्थानिवद्भावशङ्कैव नोदेतीतिचेन्न, 'प्रत्यैविषन्नि' त्याद्यर्थं पञ्चमीसमासस्यावश्यकत्वात्। नच पूर्वत्रासिद्धे

त्पूर्वत्रासिद्धे तन्निषेधात्। ङमुटः परादित्वं 'कुर्वन्नास्ते' इत्यत्र णत्वप्रतिषेधार्थम्। अत एव ङमो ह्रस्वादचि द्वे इति नासूत्रि। परं णत्वं प्रति पूर्वस्य सिद्धतया णत्वापत्तेरिति प्राञ्चः।

यत्वाहुः—बहिरङ्गपरिभाषया गतार्थत्वादुभयमप्यसङ्गतमिति। तदपि पाक्षिकम्। राज्ञ इत्यत्रेव यथोद्देशे त्रैपादिके ऽन्तरङ्गपरिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात्। कथमन्यथा द्वियं त्रियं च स्वयमेवोक्तमिति दिक्।

---

शब्दरत्न

रिति भावः। तन्निषेधादिति। "तस्य दोष" इत्यस्य तु न प्राप्तिः। लक्षसाहचर्येणादेशणत्वस्यैव ग्रहणात्। पञ्चमीसमासस्यानित्यत्वाच्चेत्यपि बोध्यम्। परादित्वमिति। ततः परस्याच इति व्याख्यानेनेत्यर्थः। ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम्। "पदस्य" (पा० सू० ८।१।१६) इति च "मादुपधाया" (पा० सू० ८।२।९) इत्यादाविवावयवषष्ठी। अजादौ पदे इत्युक्तेर्म्नां अभ्यासे इत्यतः शतरि मननित्यादावनन्त्यस्य नेति भावः। बहिरङ्गपरिभाषयेति। नुटो बहिरङ्गतयाऽसिद्धत्वादित्यर्थः। उभयम्—ङमुटः परादित्वं, द्वे इति सूत्राकरणं च। पाक्षिकम्—कार्यकालसम्बन्धि। दिगिति। दिगर्थस्तु तत्परिभाषायास्त्रिपाद्यामभाव एव। किं च यदि 'यदागमा' इति न्यायेनागमानामागमिधर्मवैशिष्ट्यमपि बोध्यते इति तेन नकाराद्यवयवनस्यापि पदान्तत्वाण्णत्वनिषेधसिद्धिरित्युच्यते; तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचि परे ङमुडित्येवार्थस्तथासति स्यान्न प्रागुक्तः, स्याच्चातिमहदनिष्टमिति स्पष्टं चेदं सर्वं भाष्ये।

---

तत्त्वाऽऽदर्शः

न स्थानिवदिति निषेध प्रतिप्रसववार्तिक 'तस्य दोषः संयोगादिलोप' इत्यादिना स्थानिवद्भावप्राप्तिरिति वाच्यम्, साहचर्यपरिभाषया तत्र वार्तिके आदेशणत्वस्यैव ग्रहणात्। यद्वा 'प्रविगणय्ये'ति भाष्योदाहरणात्पञ्चमीसमासस्यानित्यत्वेन प्रकृते स्थानिवद्भावाप्रवृत्तेः।

कुर्वन्नास्ते इति।'ङमो ह्रस्वादिति' सूत्रे ङम इति पञ्चमी, पदस्येत्यनुवृत्तं सामानाधिकरण्येन सम्बन्धाय पञ्चम्या विपरिणम्यते, साचानवकाशा, अचीति सप्तमी तु उत्तरत्र चरितार्था इति प्रकृते सा षष्ठ्यर्थे कल्प्यते। तथाच ह्रस्वात्परो यो ङम्

तदन्तं यत्पदं तस्मात्परस्याचोङमुडागम इति सूत्रार्थः, तथाच 'कुर्वन्नास्ते' इत्यत्र पदान्तस्येति सूत्रेण णत्वनिषेधार्थं ङमुटः परादित्वम्, एतदर्थमेव 'ङमोह्रस्वादचिद्वे' इति न सूत्रितम्। अन्यथा ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य पदस्येत्यस्यच मादुपधाया इत्यादाविव अवयवषष्ठीत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौपदे इत्यर्थेन पूर्वादित्वमेवकृतं स्यात्। अस्मिन् पक्षे पदस्येत्यत्र विभक्तिविपरिणामो न कार्यः, किञ्च सूत्रेऽचीतिसप्तम्यपिचरितार्था। पदेइत्यनुवृत्तं, तद्विशेषणमचीति। तेन तदादिविधिः। अतएव 'म्नाअभ्यासे' इत्यतः शतरि 'मनन्' इत्यत्रानन्त्यस्य न नुट्। यत्तु बहिरङ्गपरिभाषया गतार्थत्वात् ङमुटः परादित्वं, द्वे इति सूत्राकरणं चासङ्गतमिति, तन्न समीचीनम्, उभयपक्षेऽपि तत्परिभाषाया त्रिपाद्यामप्रवृत्तेः। नच 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति न्यायेनागमानामागमिधर्म-वैशिष्ट्यमपि बोध्यते, मानञ्चात्र प्रकृतसूत्रस्थ भाष्यग्रन्थ एव। तत्र हि 'दण्डिने' त्यत्र ङमुड्वारणाय 'पदादिग्रहणंकर्तव्यम्' इति वार्तिकस्य, पदादित्यस्यचानुवृत्ति-म्प्रदर्श्य, एवमपि 'परमदण्डिने, त्यत्र प्राप्नोतीतिशङ्कायाम् 'उत्तरपदत्वेचापदादिविधौ-प्रतिषेध' इति वचनेन दोषम्परिहृत्य, एवमपि पदादित्यपूर्वङ्कर्तव्यम्, यद्धि प्रकृतं प्राक्सुपिकुत्सनादित्येवन्तत् इति कथनानन्तरं, एवन्तर्हि ङम एवायं ङमुट् क्रियते, कथम्, पदस्येति वर्तते, ङम इति च, नैषा पञ्चमी, कातर्हि? सम्बन्धषष्ठी, पदान्तस्य ङमो ङमुट् भवतीति ह्रस्वादुत्तरस्याचीति। यदि ङम एव ङमुट् क्रियते, तर्हि 'कुर्वन्नास्ते' इत्यत्र रषाभ्यांनोणःसमानपदे' इति णत्वं प्राप्नोति, 'पदान्तस्ये'ति-प्रतिषेधोभविष्यति, पदान्तस्येत्युच्यते, नैषःपदान्तः, पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यतइत्युक्तम्। अत्रपदान्तभक्त इत्यादिनोक्तः परिभाषार्थोध्वनितः। एवञ्च नकाराद्यवयवनस्यापि पदान्तत्वाण्णत्वनिषेधसिध्या ङमुटःपरादित्वं न युक्ततरमिति वाच्यम्, पदस्य विशेष्यत्वाङ्गीकारेसति ह्रस्वात्परस्य ङमन्तपदस्याचिपरे ङमुडित्येव सूत्रार्थः स्यात्, तथाच 'अस्तिपराङात्मा' 'देवदत्तरामानितिवदे' त्यादावतिव्याप्त्या, 'कुर्वन्नास्ते' 'सन्नच्युतः' इत्यादावव्याप्त्या च महदनिष्टापत्तेः। एवञ्च लक्ष्यानुरोधा-न्मूलोक्त एवार्थः स्वीकार्य इति बोध्यम्।

चेन्न। "उत्तरपदत्वे चापदादिविधौ" इति प्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ, परमगोदुहौ, परमलिह्वावित्यादौ कुत्वघत्वढत्वादीनि न।

यत्तु प्राचा "ङ्णि च पदे" (पा० सू० ८।३।२१) इत्यतः "पदे" इत्यनुवर्त्याजादेः पदस्येति व्याख्यानाद् ङमुड् नेत्युक्तं, तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात्।

---

शब्दरत्न

प्रत्ययलक्षणप्रतिषेधादिति। इदं च प्रकृतसूत्रे भाष्ये स्पष्टम्। अनुसर्तव्यत्वादिति। यदि तु स निषेधो "अपदादिविधौ" इति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति "न लुमता"—(पा० सू० १।१।६३) इति सूत्रे भाष्ये स्पष्टम्। किं चोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिरत एव माषकुम्भवापेनेत्यादौ "पदव्यवायेऽपि"

---

तत्त्वाऽऽदर्शः

परमदण्डिनाविति। ननु 'कुर्वन्नास्ते' इत्यादाविव 'परमदण्डिना' वित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादितिचेन्न, 'उत्तरपदत्वेचापदादिविधौप्रतिषेध' इति प्रत्ययलक्षणप्रतिषेधात्। अतएव च 'परमवाचा'वित्यादौ कुत्वघत्वादीनि न भवन्ति। यत्तु—'ङ्णिचपदे' इत्यतः 'ङमोह्रस्वादि'ति सूत्रे 'पदे' इत्यनुवर्त्य अजादेःपदस्य ङमुडित्यर्थकरणेन नपूर्वोक्तस्थले दोषापात इति, तदसत्, अत्रैव नलोपं वारयितुं 'उत्तरपदत्वे' इत्यस्यावश्यकत्वेन तेनैवात्रवारणस्य योग्यत्वात्।

नच माषकुम्भवापेनेत्यत्र 'पदव्यवायेऽपीति णत्वनिषेधसिध्यर्थं यत्रोत्तरपदस्य कार्यित्वं तत्रैवायम्प्रतिषेध इत्यर्थस्यावश्यकतया प्रकृते कार्यित्वाभावेनास्याप्रवृत्त्या दोषतादवस्थ्यमितिवाच्यम्, पूर्वदण्डिप्रिय इत्यादौ नलोपसिद्धये मध्यमपदत्वानाक्रान्तस्यैवोत्तरपदत्वस्यप्रकृते विवक्षणेन कुम्भरूपोत्तरपदे तदभावेन निषेधाप्रवृत्त्या कार्यित्वनिवेशस्य व्यर्थत्वात्। नच परमलोम्निप्राय' इत्यादौ लोमन्शब्दस्य मध्यमत्वव्यावृत्त्यर्थं, यद्वृत्त्यारम्भक सुप्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वम्।

मध्यमत्वम्—वै० च स्वघटकार्थवदव्यवहितपूर्वत्व, स्वघटकार्थवदव्यहितोत्तरत्व, स्वघटकत्वमितिसम्बन्धत्रयेण, अन्यथा लोमन्नित्यस्य मध्यमत्वाक्रान्तत्वेन निषेधाप्रवृत्त्या नलोपो दुर्वारः स्यात्। तथाच पूर्वदण्डिप्रिय इत्यादौ एकवृत्तिसत्वेन दण्ड्या-

"समः सुटि" ( पा० सू० ८।३।५ ) यद्यपि मोऽनुस्वारेण सिद्धं ; तथाप्यनुनासिकत्वत्रिसकारत्वसिद्ध्यर्थमिदम् ।

"अत्रानुनासिकः" ( पा० सू० ८।३।२ ) अयमधिकारो विधिर्वेति द्वैतम् । आद्ये ऽत्रग्रहणानर्थकम् । अधिकारादेव रुप्रकरणलाभात् ।

---

शब्दरत्न

( पा० सू० ८।४।३८ ) इति निषेधसिद्धिरित्युच्यते ; तदा प्राचीनोक्तमजादेः पदस्येति व्याख्यानमेव शरणम् । स्पष्टं चेदं व्याख्यानं प्रकृतसूत्रे "उञि च पदे" ( पा० सू० ८।३।२१ ) इत्यत्र च भाष्ये । तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत् ।

त्रिसकारस्त्वेति । न च पुनर्द्वित्वेन तदपि सिद्धम् । लक्ष्ये लक्षणस्येति न्यायात् । अत्र चेदमेव ज्ञापकं बोध्यम् ।

---

तत्त्वाऽऽदर्शः

दिशब्दे तद् घटते, माषकुम्भवापेनेत्यादौ माषाणां कुम्भः माषकुम्भः तस्यवापः, इति वृत्तिद्वयसत्वेन न तत्र परिष्कृतं मध्यमत्वमस्तीति तदर्थं कार्यित्वनिवेश आवश्यक इति वाच्यम्, 'अतद्धिते' इति वार्तिकप्रत्याख्यानाय 'पदव्यवायेऽपीति सूत्रे पदपदं पदत्वयोग्यप्रतिपादकपरमिति अवश्यं वाच्यम्, अन्यथा तृतीयासमास सप्तमीसमासयोः फलभेदः स्यात्, एवञ्च माषकुम्भवापेनेत्यत्र कुम्भेत्यस्य पदत्वयोग्यता सत्वात् वार्तिकेन प्रत्ययलक्षणनिषेधेऽपि वृत्त्यभावेन तदर्थं कार्यित्वनिवेशस्य निष्फलत्वात् । नच अटधातोः कर्तरि क्विपि तेन सह परमशब्दस्य समासे निष्पन्नात्परमाट्शब्दात् क्तिच् प्रत्यये परमाट्तिरित्यादौ ष्टुत्वाद्यप्रवृत्तये कार्यित्वनिवेश आवश्यक इति वाच्यम्, इष्टापत्तेः । अतएव च प्रकृतसूत्रे परमदण्डिनावित्यत्र तेन निषेधेन सिद्धमित्यादिना भाष्यकृता नुड्वारणं कृतम् । 'उञिचपदे' इति सूत्रस्थभाष्यन्त्वेकदेशि, इति बोध्यम् ।

द्वैतमिति । अयंभावः, 'अत्रानुनासिकः पूर्वस्यतुवा' इति सूत्रस्याधिकारत्वं, विधित्वं वा । अधिकारत्वेऽधिकारादेव रुप्रकरणलाभे सूत्रेऽत्रग्रहणस्य वैयर्थ्यापत्तिः, तुशब्दस्तु परस्य नित्यं रुत्वम्, पूर्वस्य तु वाऽनुनासिक इति विलक्षणार्थद्योतकः । विधि पक्षे—तुशब्दो व्यर्थएव, एवं वाशब्दः स्पष्टार्थ एव, 'अनुनासिकात्पर' इति

तुशब्दस्त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः, परस्य नित्यं रुत्वं, पूर्वस्य तु वाऽनुनासिक इति । विधिपक्षे व्यर्थः । वाग्रहणं स्पष्टार्थम् । "अनुनासिकात्पर–" ( पा० सू० ८।३।४ ) इति ज्ञापकादेव सिद्धेः । न हि विकल्पं विना ऽनुनासिकाभावपक्ष इति सम्भवति । इदमेव ध्वनयितुं वृत्तौ तु वेति शब्दौ नोक्तौ ।

"अनुनासिकात्" ( पा० सू० ८।३।४ ) ल्यब्लोपे पञ्चमीत्याह—अनुनासिकं विहायेति । एवं च संसर्गवद् विप्रयोगस्यापि विशेषावगतिहेतु-

---

शब्दरत्न

अनर्थकमिति । इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोद्ध्यम् । स्पष्टार्थमिति । अनेन तु ग्रहणमधिकारपक्षेऽपि परस्य रुस्ततः पूर्वस्यानुनासिक इत्यर्थस्य स्पष्टं बोधनार्थं वाशब्दवदिति सूचितम् । विधिपक्षे ऽत्रग्रहणं तु एतद्प्रकरणे इत्यर्थलाभार्थम् ।

वस्तुतोऽत्राधिकारत्वमेवोचितम् । "मतुवसोः रुः—" ( पा० सू० ८।३।१ ) इति सूत्रे कृतयोः "वन उपसंख्यानं" "विभाषा भवत्—" इत्यनयोरुदाहरणे भाष्ये ऽनुनासिकाद्यनुच्चारणात् । विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव । अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः स्पष्टं चेदं वृत्ताविति तत्त्वम् ।

ल्यब्लोपे इति । दिग्योगलक्षणा तु न, अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेत्ति

---

तत्त्वाऽऽदर्शः

ज्ञापकादेव सिद्धेः । नहि विकल्पंविना अनुनासिकाभावपक्षसंभवः । एवञ्च विधिपक्ष-एवाश्रयणीय इति सूचयितुं वृत्तौ तु वेति शब्दौ नोक्ताविति मनोरमाशयः । शब्द-रत्ने तु 'मतुवसोरु' इतिसूत्रे 'वनउपसंख्यानम्' 'विभाषाभवदिति' वार्तिकयोरुदाहरणे भाष्येऽनुनासिकाद्यनुच्चारणेनास्याधिकारत्वमेवोचितम् । विधित्वे तु अनुनासिको दुर्वार एव । अधिकारत्वेसत्युत्तरत्रैव प्रवृत्तिरिति न दोष इति सिद्धान्तितम् । अतएवचास्य सूत्रस्य 'मतुवसो'रित्यनन्तरम्पाठःकृत इति बोध्यम् । विशेषावगतिरिति । संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यास्यसन्निधिः । सामर्थ्यमौचितीदेशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृति हेतवः ॥

त्वादवत्साऽऽनीयतामित्यत्रैव सम्भावितानुनासिक्यगुणक एव उपस्थितत्वा-दाकाङ्क्षितत्वाच्चावधित्वेन सम्बध्यत इत्यभिप्रेत्याह—रोः पूर्वस्मादिति। अनुस्वारागम इति। आगमत्वं च परशब्देनैव लभ्यते। "पूर्वौ तु ताभ्या-मैच—" (पा० सू० ७।३।३) इत्यत्र पूर्वशब्देनैचोरिवेति भावः।

"विसर्जनीयस्य (पा० सू० ८।३।३४) खरीति। एतच्च मण्डूकप्लुत्या "खरवसानयोः" (पा० सू० ८।३।१५) इति सूत्रादनुवर्तते। नन्वनुस्वारस्या-नच्त्वात्ततः परस्य द्वित्वं न स्यादेवेत्यत आह—अनुस्वारविसर्गेत्यादि। अकारोपरीति। यदि त्विकारोपरि पठ्येरन् तर्हि पयःसु, यशःसु, इत्यादौ इणः परस्येति षत्वं स्यादिति भावः। अच्त्वादिति। न चैवं हरिः कर्त्ता, हरिंस्मरेदित्यादौ यणादिप्रसङ्गः। त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्। अनुस्वारस्यापि द्वित्व इति। अपि शब्दात्ककारस्य। वचनान्तरेणेति। "अचो रहाभ्याम्" (पा० सू० ८।४।४६) इति कृतेऽपि "यणो मयः" इति भवत्येवेति भावः।

---

शब्दरत्न

न्यासेन सिद्धौ "अनुनासिकात्पर—" (पा० सू० ८।२।४) इत्यस्य वैयर्थ्यापत्तेरिति भावः, परशब्देनैवेति। प्रसिद्धावेवकारः।

मण्डूकेति। एकदेशे स्वरित्वप्रतिज्ञयेत्यपि बोद्ध्यम्। अत एवावसाने न सः। पूर्वेण संनिकर्षरूपा संहिता त्ववसाने ऽप्यस्त्येव। अत एव संहिताधिकारेऽवसान-कार्यपाठः सङ्गच्छते। षत्वं स्यादिति। अत एव पुंस्वित्यादावुकारं निमित्तीकृत्यानु-स्वारव्यवधाने षत्वमाशङ्क्य नुम्स्थानिकानुस्वारस्यैव "नुम्विसर्जनीय" (पा० सू० ८।३।५८) इति सूत्रे ग्रहणान्नेति भाष्यं सङ्गच्छते। इकाराद्युत्तरं पाठे हि अनुस्वार-रिणं गृहीत्वा षत्वं दुर्वारं स्यादिति भावः। यणादीति। पूर्वसवर्णदीर्घं आदिशब्दार्थः। अयं पाठो नित्यः। "अट्कुपु" (पा० सू० ८।४।५२) इति सूत्रे ऽनुस्वारोपल क्षणनुम्ग्रहणात्। अत एव हरिं जयतीत्यादौ "झलां जश् झशि" (पा० सू० ८।४।५३) इति नेति बोद्ध्यमिति कश्चित्। भवत्येवेति। एकस्य द्वितीयोच्चारणस्यैकेन साधुत्वबोधनं तयोर्मद्ध्येपरस्य द्वितीयोच्चारणस्यान्येन साधुत्वबोधनमिति भावः।

"पुमः खयि" ( पा० सू० ८।३।६ ) पुंसः संयोगान्तलोपे कृतेऽवशिष्ट-भागस्येदमनुकरणम्। पर्युदासादिति। "इदुदुपधस्य-" (पा० सू० ८।३।४१) इति षत्वविधायके सूत्रे इति भावः। अप्रत्ययस्य यो विसर्ग इति वैयधि-करण्येन व्याचक्षाणानां प्राचां मतेनेदम्। वक्ष्यमाणरीत्या सामानाधिकर-ण्येनान्वये तु षत्वप्राप्ताविति बोध्यम्।

ख्याञादेश इति। आदेशो हि उपदेशे खशादिः। असिद्धप्रकरणे णत्वानन्तरं खशाञः शस्य यत्वं विकल्प्यते। तेन सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीयः। यत्वस्यासिद्धत्वात् "धन्वयोपधात्-" ( पा० सू० ४।२।१२१) इति वुञ्नेत्यादिप्रयोजनान्याकरे स्थितानि। एवं च यत्वस्या-सिद्धतया ऽम्परत्वाभावात् "पुमः खयि" ( पा० सू० ८।३।६ ) इति रुत्वं नेत्यर्थः। पुंख्यानमिति। चक्षिङो ल्युट्। ख्याञादेशः।

---

शब्दरत्न

वक्ष्यमाणरीत्येति। प्रत्ययरूपो यो विसर्ग इति व्याख्यादर्शरीत्येत्यर्थः। वस्तुतस्त-दसङ्गतम्। कविभिः कृतमित्यादौ दोषापत्तेः। एतच्चान्वये "तु" इति तुना ऽरुचि-बोधकेन सूचितम्। यदा तु सूतेः सस्य षकारोऽन्त्यस्य ह्रस्वो म्सुः प्रत्यय इति "स्त्रियाम्" ( पा० सू० ४।१।३ ) इति सूत्रभाष्यकैयटोक्तव्युत्पत्तिस्तदा सस्य लोपे मस्यैव प्रत्ययत्वमिति व्याख्यादर्शोक्तसामानाधिकरण्येऽपि षत्वाप्राप्तिरेव। पातेर्डु-म्सुन्निति व्युत्पत्तिमादाय तु मूलमिति दिक्।

---

तत्त्वाऽऽदर्शः

पुंख्यानमिति। चक्षिङ् धातोः ल्युट् प्रत्ययः, तत्स्थाने 'युवोरनाका' विति सूत्रेणानादेशः, 'चक्षिङः ख्याञ्' इति सूत्रेण आर्धधातुके परतः चक्षिङः ख्याञा-देशः। आदेशो हि उपदेशे खशादिः, 'असिद्धकाण्डेशस्ययोवा' इति शस्य यत्वं विकल्प्यते, तथाच भाष्ये खशादित्वप्रयोजनगणनवार्तिकम्' रुविधिः, पुंख्यानमिति। णत्वं, पर्याख्यानमिति। निष्ठानत्वमाख्यातमिति। एवमेव 'सौप्रख्यीय' इत्यत्र यत्वस्यासिद्धत्वेन योपधत्वेन योपधत्वाभावात् 'धन्वयोपधाद्वुञ्' इति सूत्रेण वुञ् न। तथाच प्रकृते 'पुंख्यान' मित्यत्र तत्वस्यासिद्धत्वेनाम्परत्वाभावात् 'पुमःखय्यम्परे'

नन्वादेश इह दुर्लभः। "वर्जने प्रतिषेधः" "असनयोश्च" इति वार्तिकादिति चेत्। सत्यम्। "बहुलं तणि अन्नवधकगात्रविचक्षणाजिराद्यर्थम्" इतिवार्तिके बहुलग्रहणात्समाधेयम्। तथा च ख्शादित्वप्रयोजनगणनवार्तिकम्। रुविधिः—पुंख्यानमिति। णत्वं—पर्याख्यानमिति। निष्ठानत्वमाख्यातमिति च। शकारेण व्यवधानात् "कृत्यचः" (पा० सू० ८।४।२९) इति णत्वं न। तथा आख्यातमित्यत्र "संयोगादेरात—" (पा० सू० ८।२।४३) इति नत्वं न। यत्वस्यासिद्धया यण्वत्ताविरहात्। एवं च "न ध्याख्या—" (पा० सू० ८।२।५७) इति सूत्रे ख्याग्रहणं न कर्तव्यमिति भावः। न च ख्या प्रकथने, इत्येतदर्थं तदिति वाच्यम्। तस्य सार्वधातुकमात्रविषयत्वात्। अत्र च "सस्थानत्वं नमः ख्यात्रे" इत्युत्तरवार्तिकं प्रमाणम्। सस्थान इति जिह्वामूलीयस्य प्राचां सञ्ज्ञा। स इह न। "शर्परे विसर्जनीयः" (पा० सू० ८।३।३५) इत्यस्यप्रवृत्तेरिति भावः। यदि स्वतन्त्रोऽपि धातुरार्द्धधातुके इष्येत; तदा जिह्वामूलीयस्य दुर्वारतयेदं वार्तिकमसङ्गतं स्यात्।

---

शब्दरत्न

शकारेणेति। यत्वासिद्धत्वादिति भावः। न कर्तव्यमिति। यत्वासिद्ध्या यण्वत्ताविरहेण नत्वाप्राप्तेरिति भावः। अत्र चेति। ख्यातेः सार्वधातुकमात्रविषयत्वे इत्यर्थः। सञ्ज्ञेति। एवं च तदुत्तरभावप्रत्ययेन सस्थानशब्द उच्यते। तेन स्ववाच्यो जिह्वामूलीयो वार्तिके लक्ष्यते। कुत्वं कस्मान्न भवतीत्यत्रत्रेति भावः। क्शादीति पाठे

---

तत्त्वाऽऽदर्शः

इति सुत्रेण न रुत्वम्। एवमेव 'आख्यात'मित्यत्र यत्वस्यासिद्धत्वेन यण्वत्ताविरहेण 'संयोगादेरातोधातोर्यण्वत, इति सूत्रेण निष्ठानत्वं न। एवञ्च 'नध्याख्यापॄमूर्च्छिमदाम्' इति सूत्रे ख्या ग्रहणं न कर्तव्यम् तत्र नत्वाप्राप्तेः। नच 'ख्याप्रकथने' इत्येतदर्थं तदितिवाच्यम्, तस्य धातोः सार्वधातुकमात्रविषयत्वात्। मानञ्चात्र 'सस्थानत्वं नमःख्यात्रे' इति वार्तिकन्तद्भाष्यञ्च। सस्थानोनाम जिह्वामूलीयः, स प्रकृते न, 'शर्परेविसर्जनीय' इत्यस्य प्रवृत्तेः। यद्ययमार्धधातुकेऽपि प्रयुज्येत तर्हि तृजन्तेऽस्मिन्परे 'शर्परेविसर्जनीय' इस्यस्याप्रवृत्त्या 'कुप्वोः'इति जिह्वामूलीयो दुर्वारः स्यादेवेति

यत्तु हरदत्तमाधवादिभिरुक्तं ख्याधातुरपि खशादिर्यत्वविधिरप्युभयसाधारण इति। तच्चिन्त्यम्। भाष्ये चक्षिङ एवोपक्रमात्सार्वधातुकेऽपि खशादिप्रयोगापत्तेश्च। नचेष्टापत्तिः। माधवेनार्द्धधातुकेष्वेवायं ख्शादिरित्युक्तत्वात्। सार्वधातुकेऽनभिधानस्यैव शरणीकर्तव्यत्वापत्त्या गौरवग्रस्तत्वाच्चेत्यास्तां तावत्। स्यादेतत्। बह्वः पुमांसोऽस्मिन् कुले बहुपुम् ख्यातीत्यत्र रुत्वं स्यात्। "उरः प्रभृतिषु" ( पा० सू० ५।४।१५० )। पुम्शब्दस्यैकवचनान्तस्यैव पाठान्नेह कप्। सार्वधातुके च ख्यातेः प्रयोगो निर्बाध एवेति चेत्। इष्टापत्तेः। संहिताया अविवक्षायां तु रुत्वं नेति स्पष्टमेव।

यत्तु प्राचा "ख्याधातौ नेति केचित्" इत्युक्तं, तत्र यदि ख्यात्रादेशे इत्यर्थस्तर्हि केचिदित्यनुचितम्। स्वतन्त्रे धातौ चेत्तर्हि सार्वधातुकविषयेऽपि निषेधः स्यात्। न चेष्टापत्तिः। निर्मूलत्वात्।

---

शब्दरत्न

प्रयोगे चत्वंप्रवृत्तिरिति भावः। इत्युक्तत्वादिति। एवं च माधवो नेष्टापत्तिं कर्तुमर्ह इत्यर्थः। अनभिधानस्यैवेति। ख्शादेरनभिधानस्यैवेत्यर्थः। गौरवेति। ख्शादित्वं स्वीकृत्यानभिधानस्वीकारापेक्षया तदस्वीकृत्यैव ख्यातेरार्धधातुकेऽनभिधानस्यैवस्वीकारेलाघवमिति भावः। सत्वं स्यात् रुत्वमित्युपलक्षणं जिह्वामूलीयस्य षत्वस्य च। नमः ख्याति, निःख्यातीत्यादौ।

---

तत्त्वाऽऽदर्शः

बोध्यम्। परेतु 'नख्याख्या' इतिसूत्रे ख्याग्रहणवैयर्थ्यात्तस्याऽऽर्धधातुकेष्वपि प्रयोगाङ्गीकारावश्यकत्वे तु स्वतन्त्रधातौ 'नख्याख्या' इति निषेधेन, आदेशे यण्वत्वाभावेन नत्वाप्राप्त्या निष्ठानत्वाभावे स्वतन्त्रधातौ 'लुन्योगाप्रख्यानात्' इति निर्देशाण्णत्वाभावनिपातनेन आदेशप्रयोगे शर्व्यवधानाण्णत्वाप्राप्त्या णत्वाभावे संवादस्य सत्वेऽपि 'रामᳲख्याती'त्यत्रेव 'रामःख्शाता' इत्यादौ जिह्वामूलीयाभावे, सौप्रख्यशब्दाद् वुञभावे, पुंख्यानमित्यत्र रुत्वाभावे संवादाभाव एवेति 'चक्षिङःख्शाञ्ख्याञौ' इत्युभयविधादेशसिद्धान् 'लक्ष्येरूपद्वयप्रदर्शनात्' इति कैयटसम्मतान् उभयविधप्रयोगान् कथं वारयेमेति विदाङ्कुर्वन्तु सुधिय इति वदन्ति।

चक्रिंस्त्रायस्वेति । यत्तु प्राचा त्राहीत्युक्तं तत्र परस्मैपदमयुक्तम् । त्रायतेर्ङित्त्वात् । त्रायत इति त्राः स इवाचरेत्यर्थे कर्तरि क्विबन्तादाचारक्विपि वा बोद्धव्यम् । प्रशानिति । प्रपूर्वाच्छाम्यतेः क्विप् । अनुनासिकस्य क्वि–" ( पा० सू० ६।४।१५ ) इति दीर्घः । "मो नो धातोः" ( पा० सू० ८।२।६४ ) इति नः । तस्यासिद्धत्वान्नलोपो न ।

"नृन्पे" ( पा० सू० ८।३।१० ) पकारोपर्यकार उच्चारणार्थः । तेन नॄः पुनातीत्यादि सिद्धम् । "उभयथर्क्षु–" इत्यत 'उभयथा' इत्यनुवृत्तेर्विकल्पः फलित इत्याशयेनाह—रुः स्याद्वेति ।

"कुप्वोः" (पा० सू० ८।३।३७) सूत्रे खर्परत्वाद्विसर्गः, जिह्वामूलीयस्य खत्वात् । "खर्परे शरि" इति विसर्गस्य लोपः, जिह्वामूलीयस्य शत्वात् । "वा शरि" (पा०सू० ८।३।३६) इति विसर्ग एव वा । आदेशयोः कपावुच्चारणार्थौ ।

---

शब्दरत्न

त्रायतेर्ङित्त्वादिति । अत्र त्रायते इत्युक्त्या सत्यपि परस्मैपदे त्रायेत्यस्य प्राप्त्या त्राहीत्यस्यासिद्धिः सूचिता । आचारक्विपि वेति । नामधातौ मूलधात्वादेर्ङित्त्वाद्या-श्रित्य "अनुदात्तङित ( पा० सू० १।३।१ ) इत्यादेः प्रवृत्तिर्नेत्यभिमानः । अत एव "त्राहि मां पुण्डरीकाक्ष" इति सङ्गच्छते इति भावः । आर्षं तत्र तदित्यन्ये । शाम्यतेरिति । न तु शान तेजने इत्यतः, तस्य पदान्ते नलोपेन नान्तत्वासम्भवादिति भावः । न च "अप्रशान्" इति पर्युदासेन नान्तग्रहणेन सिद्धे "नः" इति व्यर्थमिति वाच्यम् । अस्य लक्षणवशसंपन्ननान्तत्वेन पर्युदासेनापि लक्षणवशसम्पन्ननकारान्ताना-मेवापत्तेः ।

ननु "कुप्वोः" ( पा० सू० ८।३।३७ ) इत्यत्र जिह्वामूलीयस्य खत्वाद्विसर्गे तस्य सत्वे सश्रवणापत्तिरत आह—सूत्रे इत्यादिशत्वादित्यन्तेन । विसर्गलोपश्च सत्वापवादः । एवं च सूत्रे निर्विसर्गपाठ इतिभावः । सविसर्गपाठेऽप्याह–"वा शरि" ( पा० सू० ८।३।३६ ) इति । स च सत्वापवादः । "खर्परे" इति च वैकल्पिक-मिति भावः । उच्चारणार्थाविति । तयोरुच्चारणस्य तौ विना असम्भवेन नान्तरीयकतया तयोरुच्चारणं न तु तयोर्विधेयत्वम् । किं तु तन्मात्रे तयोर्लक्षणा व्याख्यानादिति भावः ।

चाद्विसर्ग इति। यत्तु प्राचा चाद्विकल्प इत्युक्तं; तन्न। कपाभ्यां मुक्ते विसर्गस्य सत्वप्रसङ्गात्।

"कानाम्रेडिते" (पा० सू० ८।३।१२) कान् कानिति वाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यादिह मा भूत्। कान् कान् पश्यसि। अत्रैकः किंशब्दः प्रश्ने, द्वितीयः क्षेपे। कान् कुत्सितान् पश्यसीत्यर्थः।

"कस्कादिषु च" (पा० सू० ८।३।४८) अत्र प्राचा विसर्जनीयस्य ≍क≍पौ नेत्युक्तं, नासौसूत्रार्थः। ≍क≍पयोरस्वरितत्वात्, नञश्चाप्रकृतत्वात्। किं त्वार्थिकार्थकथनं तदिति ध्वनयन्नाह—≍क≍पयोरिति। कौतस्कुत इति। कुतः कुतः आगत इत्यर्थेऽव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादण्। सर्पिष्कुण्डिकेति। "नित्यं समासे" (पा० सू० ८।३।४५) इत्येव सिद्धे इह पाठस्य प्रयोजनं तु तत्रैव वक्ष्यते। "सेनासुरा—" इति। यदि हि च्छस्य तुक् स्यात्, तर्हि च्छस्य चर्त्वे सति चद्वयं स्यात्। सन्निपातपरिभाषया चर्त्वाप्रवृत्तौ तु छकारोपरि चकारः श्रूयेतेति भावः।

॥ इति हल्सन्धिः ॥

---

शब्दरत्न

चाद्विकल्प इति। निपातानामनेकार्थत्वाच्चशब्दो विकल्पार्थ इति तदाशयः। सत्त्वप्रसङ्गादिति। चानुकृष्टविसर्गस्तु सत्वापवाद इति नास्माकं दोष इति भावः।

गणपाठसामर्थ्यादिति। एतेन पञ्चम्यन्तात्स्वार्थे तसिल्विधानेनान्ययादुत्सर्गतः प्रथमैकवचनोत्पादेन पञ्चम्यन्तत्वाभावात् "तत आगतः" (पा० सू० ४।३।७४) इत्यर्थे कथमणित्यपास्तम्। "अव्ययानाम्" इति टिलोपः। सन्निपातेति। असिद्धविषये ऽपि सा प्रवर्तते।

यद्वा पूर्वत्र कर्त्तव्ये ऽसिद्धत्वे ऽपि तत्र कृते उत्तरस्यासिद्धत्वे मानाभाव इति नासिद्धत्वेन सन्निपातरिभाषाप्रवृत्तिप्रतिबन्धः शङ्क्य इति भावः वैकल्पिकेष्वपि भावानुष्ठानस्यैवौचित्यं फलाधिक्यायेति तात्पर्यम्।

॥ इति हल्सन्धिः ॥

—:o:—

# अथ विसर्गसन्धिः ।

"शपरे" ( पा० सू० ८।३।३५ ) सत्वादेरयमपादः । यदि तु शर्परे नेत्येवोच्येत, तर्हि प्रकृते सत्वे निषिद्धेऽपि कुप्वोः ≍क≍पौ स्याताम् । वासः क्षौमम्, अद्भिः प्सातमिति । विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह—न त्वन्यदिति । तदेवस्फुटयति—इहेति ।

"सोऽपदादौ" ( पा० सू० ८।३।३८ ) अपदाद्योरिति । सूत्रे तु व्यत्ययेनैकवचनम् । यदि तु खर् विशेष्यतेऽपदादौ खरीति तदा यथाश्रुतं साधु । किं तु 'खरि' इति मण्डूकप्लुत्या ऽनुवर्त्यमिति क्लेशः । न चानुवृत्तेरुत्तरत्राप्यावश्यकता । खरं विना विसर्गस्य दुर्लभत्वेन तदनुवृत्तेर्निष्फलत्वात् । पाशकल्पककाम्येष्विति वृत्तिः । सम्भवप्रदर्शनमेतन्न तु परिगणनम् । अन्यस्यासम्भवात् । प्रातःकल्पमिति । अधिकरणशक्तिप्रधानस्यापि । प्रातः-

---

शब्दरत्न

नेत्येवोच्येतेति । "कुप्वो" ( पा० सू० ८।३।३७ ) इत्यत्रापि चेन सत्त्वं नेत्येवानुकृष्टव्यमिति भावः । स्यातामिति । सत्वनिषेधे "खरवसानयोः" ( पा० सू० ८।३।१५ ) इति विहितविसर्गस्य सत्त्वादिति भावः । विकारमात्रमिति । तत्सामर्थ्याच्चानेन तस्यैव प्रत्यापत्तावपि न ताविति भावः । एतेनैतद्विहितस्य स्थानेऽपि तौ स्याताम् । किं चास्यैव तौ स्यातां "खरवसानयोः—" इति विहितस्य त्वेतयोरसिद्धत्वात् "विसर्जनीयस्य" ( पा० सू० ८।३।३३ ) इति सत्वमेव स्यादित्यपास्तम् । अर्थाधिकारेण "खरवसानयोः ( पा० सू० ८।३।१५ ) इति विहितविसर्गस्यैवातिदेशाच्च । विसर्जनीयस्य सोऽशर्पर इति तु न सूत्रं कृतम् । "वा शरि" (पा० सू० ८।३।३६) इत्यनेन सत्वस्य विकल्पेन सिद्धावपि "कुप्वोः" (पा०सू० ८।३।३७) इत्यत्राशर्पर इत्यनुवृत्त्या तयोः शर्परेऽप्रवृत्तावपि "कुप्वोः—" (पा०सू० ८।३।३७) इति सूत्रे चाद्विसर्गलाभानापत्तेः ।

व्यत्ययेनेति । सौत्रत्वादिति भावः । इति क्लेश इति । किंच पूस्तरेत्यादौ षत्वादिवारणाय "कुप्वोः" ( पा० सू० ८।३।३७ ) इत्यनुवर्त्य तदन्तर्गते खरीति व्याख्याने सुतरां क्लेश इत्यपि बोद्ध्यम् । अन्यस्यासम्भवादिति । अयंभावः

शब्दस्येह वृत्तिविषये शक्तिमत्परत्वम्। दोषाभूतमहः, दिवाभूता रात्रिरितिवत्। गोः काम्यतीति। इह "इणः षः" (पा०सू० ८।३।३९) इति षत्वं न। तत्रापि "काम्ये रोरेव" इत्यस्यानुवृत्तेः। यदि तु तत्रैवेदं पठ्येत तर्हि षत्वमात्रप्रतिषेधेऽपि पूर्वेण सत्त्वं स्यात्।

"इणः षः" ( पा० सू० ८।३।३९ ) पूर्वस्यापवादः। इदं सूत्रं "सः" इति च द्वयमपि उत्तरत्रानुवर्तते। यथा सम्भवमिणः परस्य षोऽन्यस्य स इति विवेकः। पुरः प्रवेष्टव्या इति। पॄ पालनपूरणयोः "भ्राजभास–" ( पा० सू० ३।२।१७७ ) इत्यादिना क्विप्। तदन्ताज्जस्। जसन्ततां स्फुटीकर्तुं पूः पुरावित्युपन्यस्तम्।

"इदुदुपधस्य" ( पा० सू० ८।३।४१ ) इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्जनीय इति वैयधिकरण्येन सम्बन्धः। "अप्रत्ययस्य"

---

शब्दरत्न

अपदे इत्येव "कुप्वोः" ( पा० सू० ८।३।३७ ) इत्यनुवर्त्य "यस्मिन्विधिः—" इतिपरिभाषया कपवर्गादौ अपदे इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभार्थम्। तेनोरः कायतीति विग्रहे सुबुत्पत्तेः पूर्वं समासे ऽप्युरः केणेत्यादौ न सत्वम्। आदिग्रहणसामर्थ्येन तल्लब्धावधारणेन च पदत्वयोग्यप्रातिपदिकानवयवस्यैव ग्रहणादिति। शक्तिमत्परत्वमिति। अव्ययत्वं तु भूतपूर्वगत्या बोध्यमिति भावः। षत्वं नेति। सत्वं नेत्यपि बोध्यम्। तत्रापि—सत्वविधावपि। एवं चात्र पाठात्तत्रानुवृत्तेश्चोभयमपि नेति बोध्यम्॥

---

तत्त्वाऽऽदर्शः

अपदस्यैवादिरिति। अवधारणेन च प्रातिपदिकव्यावृत्त्या पदस्यादिः पदादिः न पदादिः अपदादिः तस्येत्यर्थः। अन्यथा करोतीत्यत्र क इत्यस्यापदत्वेन तस्यादित्वेन सत्वापत्तेः।

इदुदुपधस्येति। अत्र सम्भवति सामानाधिकरण्ये वैयधिकरण्येन नान्वय इति नियमेनाप्रत्ययस्य विसर्जनीयपदेन सामानाधिकरण्येन, इदुदुपधस्येत्यस्य वैयधिकरण्येनान्वयः। तथाच इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्जनीयो ऽप्रत्य-

इति तु अप्रत्ययो यो विसर्ग इति सम्बद्ध्यते। सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्। अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्, "अप्रत्ययस्य" इति निषेधेनैव सिद्धत्व-ज्ञापकात्। अत एवाग्निरित्यादौ रोर्विसर्गः सिद्ध्यति। अन्यथा ऽपदान्त-त्वान्न स्यात्। विसर्गविधिस्तु पुनरित्यादौ चरितार्थः। ज्ञापकं च विशेषा-

---

## शब्दरत्न

समुदायस्येति। "अलोऽन्त्यात्" (पा०सू०१।१।६५) इति सूत्रे अवयववा-चकान्त्यशब्देन समुदायस्याक्षेपेण उपधात्वस्य समुदायनिरूपितत्वादिति भावः। इदुदुपधस्य विसर्गान्तस्य पदस्येति सामानाधिकरण्येनान्वयः। षत्वं तु "अलोऽन्त्य-स्य" (पा० सू० १।१।५२) इत्यनेन विसर्गस्येत्यन्ये। व्याख्यादर्शोक्तरीत्याऽऽह— अप्रत्ययो य इति। तत्प्रसिद्धेरिति। विसर्गस्य प्रत्ययत्वप्रसिद्धेरित्यर्थः। नस्यादिति। रोरसुप्त्वेन पदत्वाप्रवृत्तेरिति भावः। चरितार्थ इति। ननु तत्रापि पुनर् स् इत्यव-स्थायां जातपदत्वस्यातिदेशेनैव सुलोपे कृते आनयनमिति को विशेषः। न चैकदे-

---

## तत्त्वाऽऽदर्शः

यरूपश्च तस्य षत्वं भवतीति सूत्रार्थः। नच विसर्गस्य प्रत्ययत्वाभावेन निषेधो व्यर्थ इति वाच्यम्, स्थानिवद्भावेन तत्वसिद्धेः। यद्यपि स्थानिवत्सूत्रंप्रति षत्वविधायक-सूत्रस्यासिद्धत्व न्तथापि अप्रत्ययस्येति निषेधेनैव सिद्धत्वम्। अन्यथा रोरसुप्त्वेन पदत्वाप्रवृत्त्याऽपदान्तत्वात् 'अग्नि'रित्यादौ विसर्गो न स्यात्। नच पदान्ते विसर्ग-विधानसामर्थ्यादेव तत्सिद्धिः, पुनरित्यादौ तच्चारिताथ्यात्। नच तत्रापि पुनर् स् इत्यवस्थायां जातपदत्वस्य प्रत्ययलक्षणेनानयने अतिदेशम्प्रति त्रिपाद्या असिद्धत्वेन विसर्गविधेश्चारितार्थ्याभाव इति वाच्यम्, एकदेशविकृतन्यायेन तत्सिद्धेः। नचैव मग्निरित्यत्रापीति वाच्यम्, अग्निरित्यत्रातिदेशस्यातिदेशलभ्यकार्यस्यच ासिद्धत्वम्, अत्र तल्लभ्यकार्यस्यैवेति विशेषात्। ननु पुनरित्यत्र यद्यतिदेशापेक्षा न भवेत् तदा ज्ञापकानुसरणाभावो न्याय्यः स्यात्। तथातुनास्तीतितस्याकिञ्चित्करत्वमितिचेन्न, 'अणुरपिविशेषोऽध्यवसायकर' इति न्यायेनाकिञ्चित्करस्य वक्तुमशक्यत्वात्।

पेक्षम्। तेन "अचः परस्मिन्–" ( पा० सू० १।१।५७ ) इति त्रिपाद्यां न प्रवर्तते। एवं च "पूर्वत्रासिद्धे न स्थानिवत्" इति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति प्रपञ्चितं शब्दकौस्तुभेऽस्माभिः।

---

शब्दरत्न

र्शविकृतन्यायेन सिद्धिः। अग्निरित्यत्रापि समत्वात्! न चाग्निरित्यत्रादेशस्यातिदेशलभ्यकार्यस्य चासिद्धत्वमत्र तल्लभ्यकार्यस्यैवेति विशेष इति वाच्यम्। सर्वथा अतिदेशापेक्षणेन तस्याकिञ्चित्करत्वात्। किंच रुत्वासिद्धत्वेनाग्निरित्यत्र पदत्वं सुलभम्। किं च विसर्गस्थान्यलरूपरेफवृत्तिप्रत्ययत्वस्य स्थान्यल्धर्मत्वेन तदतिदेशाप्रवृत्तिरिति प्रत्ययरूपो विसर्गो दुर्लभः। स्पष्टा चेयं रीतिः "भोभगो—" ( पा० सू० ८।३।१६ ) इति सूत्रे भाष्ये। किं चैवं सामानाधिकरण्ये "असोः" इति वक्तव्ये ऽप्रत्ययग्रहणं व्यर्थं स्यात्। किं चैवं "नित्यं समासे—" ( पा० सू० ८।३।४५ ) इति सूत्रे "अनुत्तरपदस्थस्य" इत्यस्य वैयर्थ्यम्। परमसर्पिः कुण्डिकेत्यादावनेन षत्वस्य दुर्वारत्वात् किंचैवं "नित्यं समासे—" ( पा०सू० ८।३।४५ ) इति सूत्रस्थभाष्यासङ्गतिः। तथा हि—अथाव्युत्पन्नं प्रातिपदिकं सर्पिरादि ततो नित्ये प्राप्ते "इसुसोः सामर्थ्ये ( पा० सू० ८।३।४४ ) इति विभाषा आरभ्यत इति तत्रोक्तम्। प्रत्ययत्वपर्याप्त्यधिकरणभिन्नस्येत्यर्थे तु व्युत्पत्तिपक्षे ऽपि नित्यषत्वप्राप्तेरथाव्युत्पन्नमित्यादेरसङ्गतिः स्पष्टैव। अत्र भाष्येऽथेति यद्यर्थे। तेन सर्पिषा यजुषे-

---

तत्त्वाऽऽदर्शः

नच रुत्वासिद्धत्वेनाग्निरित्यत्र पदत्वे पूर्वोक्तज्ञापकानुपयोग इति वाच्यम्, कार्यकालपक्षे 'पूर्वत्रासिद्ध'मिति सूत्रस्य पूर्वपदेन पदसंज्ञाविधायकसूत्रस्याग्रहणेन तद् दृष्ट्या रुत्वासिद्धत्वप्रतिपादनासंभवात्। नच विसर्गस्थान्यलरूपरेफवृत्तिप्रत्ययत्वस्य स्थान्यल्धर्मत्वेनानल्विधावितिनिषेधात् स्थानिवद्भावेन प्रत्ययत्वरूपो विसर्गो दुर्लभ इति वाच्यम्, 'आघये' 'चिकीर्षवे' इत्यादि सिद्धयर्थमलत्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मेण साक्षादवच्छिन्नोद्देश्यताके कार्ये न स्थानिवत् इत्यर्थस्यावश्यकत्वेन प्रकृते प्रत्ययत्वेन साक्षादवच्छिन्ना षत्वशास्त्रीयोद्देश्यता नास्तीति तत्त्वसिद्धेः। नच 'असो' रितिकथनेनैव सामानाधिकरण्येसिद्धेऽप्रत्ययग्रहणंव्यर्थमितिवाच्यम्,

नन्वेवं मातुः कार्यमित्यादौ षत्वं स्यादिति चेन्न। कस्कादिषु भ्रातुष्पुत्र-शब्दस्य पाठेन ङसिङसोः अत उकारात्परस्य षत्वं नेति ज्ञापकात्। एवं च अप्रत्ययस्य इत्येतदपि व्यधिकरणमेवेति हरदत्तेनोक्तं नातीवादर्तव्यम्।

---

शब्दरत्न

त्यादौ षत्वसिद्धये व्युत्पत्तिपक्ष एव न त्वसाविति सूचितम्। तस्मादत्र प्रत्ययपदं तत् सम्बन्धिपरं प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्येत्यर्थः उचितः। अतएव कविभिः कृत-मित्यादौ न दोषः। "नित्यं समासे—" ( पा०, सू० ८।३।४५ ) इति सूत्रस्थानु-त्तरपदस्थस्येत्यस्य कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्य चैतदर्थज्ञापकतैवोचितेति चेत्सत्यम्। व्याख्यादर्शानुसारेणैतद्ग्रन्थसत्त्वात्तद् ध्वनयन्वदयति—नातीवादर्त-व्यमिति। न प्रवर्तत इति। अत एव तिरश्चेत्यादौ सस्य श्चुत्वसिद्धिः। एतच्चेष्टा-नुरोधेन संयोगादिलोपलत्वणत्वातिरिक्तविषयं तेन तत्र स्थानिवत्त्वं भवत्येवेति "तस्य दोष—" इत्याद्यपि न वाचनिकमिति भावः।

मातुः कार्यमिति। सिद्धान्तव्याख्यानेऽप्यत्र दोषः। तथा हि सकारसन्निधाव-कारो नैव प्रत्ययः समुदायनिवेशितत्वात्प्रत्ययत्वस्येति तदादेशस्योरः प्रत्ययत्वाभावेन

---

तत्त्वाऽऽदर्शः

अमुष्याट् शब्दादाचक्षाणण्यन्तात्कर्तरिक्विपि,टिलोपयलोपयोः कृतयोः 'अमुःकरोती'-त्यादौ षत्वापत्तेः। नचैवं 'परमसर्पिःकुण्डिके' त्यत्रषत्वस्यानेन दुर्वारतया 'नित्यं-समासे' इतिसूत्रे ऽनुत्तरपदस्थस्येत्यस्य वैयर्थ्यमिति वाच्यम्, 'सर्पिष्कुण्डिके'त्यादि-समासे व्युत्पत्तिपक्षेऽव्युत्पत्तिपक्षे वा सर्पिस्इत्यादिस्थसकारस्थानिकविसर्गस्य प्रत्यय-स्वरूपविसर्गभिन्नत्वेन तत्र 'इदुदुपधस्ये'त्यनेन नित्यषत्वप्राप्त्या 'नित्यंसमासे' इति सूत्रे नित्यग्रहणस्य स्पष्टार्थतया ऽस्य सूत्रस्य समासघटकोत्तरपदस्थविसर्गस्य षत्व-निषेधार्थकतया ऽऽवश्यकत्वेन तच्चारितार्थ्यात्। यद्यपि उक्तरीत्या सामानाधिकरण्या-ङ्गीकारे नपूर्वोक्त दोषापात स्तथापि 'नित्यंसमासे'इतिसूत्रस्थभाष्यासङ्गत्या प्रत्ययपदं प्रत्ययसम्बन्धिपरम्, तथाच प्रत्ययावयवभिन्नस्य विसर्गस्य षत्वमिति सूत्रार्थः। अतएव च 'कविभिःकृत'मित्यादौ न दोषावसर इति बोध्यम्।

मातुःकार्यमिति। अयंभावः, 'इदुदुपधस्ये' तिसूत्रस्य प्रत्ययभिन्नो यो विसर्ग-

शब्दरत्न

विसर्गस्य तत्सम्बन्धित्वाभावात्। यस्तूत्वे कृते ऽवशिष्टः सकारः प्रत्ययसञ्ज्ञकः, स लुप्त एव। न च "अन्तादिवच्च" (पा० सू० ६।१।८५) इत्यस्य पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापीत्यर्थादुरसित्यत्र प्रत्ययत्वस्य सुलभतया एकदेशविकृतन्यायेनोरसित्यस्य प्रत्ययतया न दोष इतिवाच्यम्। त्रिपाद्याअसिद्धत्वेन तत्रान्तवत्त्वाप्रवृत्तेः। स्थानिवत्त्वेन तु न निर्वाहः। उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाभावात्। प्रत्ययसम्बन्धित्वं तु न स्थानिवत्त्वलभ्यमशास्त्रीयत्वात्। "सर्वे सर्वपदादेशा" इति न्यायेन मातृअसित्यस्य स्थानित्वेऽप्यसित्यस्य स्थानित्वालाभेनोऽरसित्यस्य प्रत्ययत्वमलभ्यमिति। एतदेवाभिप्रेत्य प्रकृतसूत्रे "उरण् रपरः" (पा० सू० १।१।५१) इति सूत्रे च भाष्ये उक्तम् "इह कस्मान्न भवति पितुः करोति, "अप्रत्ययस्य" इति षत्वं प्राप्नोति, अप्रत्ययविसर्जनीयस्येत्युच्यते, प्रत्ययविसर्जनीयश्चायं, लुप्यते ऽत्र प्रत्ययविसर्जनीयो "रात्सस्य" (पा० सू० ८।२।२४) इति"। लुप्यते ऽत्रेत्यादेरयमर्थः। प्रत्ययविसर्जनीयत्वेन यस्त्वाभिमतः स लुप्यते, न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादिति बोद्धव्यम्। ज्ञापनादिति। प्रत्ययस्य सम्बन्धी यो विसर्गस्तस्य नेत्यर्थ इति तद्भावः। अगत्या च वाक्यभेदाऽसमर्थसमासवैयधिकरण्यान्वयरूपदोषत्रयसहनमिति तदभिमानः। व्यधिकरणमेवेति। वैयधिकरण्यान्वयफलस्य कविभिः कृतमित्यादेः प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्येत्येवं लक्षणया सामानाधिकरण्येनापि संग्रहसम्भवा-

तत्त्वाऽऽदर्शः

स्तस्य षत्वमित्यर्थे 'मातुःकार्य'मित्यत्रषत्वापत्तिः। नच प्रत्ययसम्बन्धिभिन्नो यो विसर्गस्तस्य षत्वमिति सिद्धान्तार्थपक्षे 'कविभिःकृत'मितिवत् न षत्वमितिवाच्यम्, तत्त्वपक्षेऽपि दोषसम्भवात्। नच ङसोऽकारवृत्तिप्रत्ययत्वं तदादेशे स्थानिवत्त्वेनादाय विसर्गस्य प्रत्ययसम्बन्धित्वमितिवाच्यम्, प्रत्ययत्वस्य पर्याप्त्या समुदाये सत्वेन सकारस्य विद्यमानतया अकारे तत्त्वाभावेन तदादेशे तत्त्वानयनासंभवात्। नच विद्यमान सकारे उत्वादेशे सकारपर्याप्तप्रत्ययत्वमादाय दोष निस्तार इति वाच्यम्, सकारस्य लुप्ततया तेन सहैव प्रत्ययत्वस्यापि निवृत्तेः। यद्यप्यन्तादिवच्चे'त्यनेन परस्थानिवर्तितसमुदायवृत्तिधर्मस्य परादिवद्भावेन एकादेशविशिष्टे आदाय 'एकदेश-

मातुरिति। अत्र हि "ऋत उत्" (पा० सू० ८।१।१११) इत्येकादेश-शास्त्रं विसर्गं प्रति परम्परया प्रयोजकम्। आकरे तु एकादेशशास्त्रनिमित्तात्" इति प्रचुरः पाठः। तत्र एकादेशशास्त्रं निमित्तं यस्य उकारस्य तस्मादित्यर्थः।

मुहुः कामेति। इह "कुप्वोः ≍क≍पौ" (पा० सू० ८।३।३७) इति प्रवर्तते। वृत्तौ मुहुस्कामेति सकारः क्वचित् पठ्यते, तत्प्रामादिकमिति हरदत्तः।

---

शब्दरत्न.

दिति। भावः। व्याख्यादर्शोक्तसामानाधिकरण्ये तु लेशतोऽपि तदादराभावादतीवेत्यसङ्गतमेव स्यादिति। अनेनोक्तव्याख्याया एव स्वाभिमतत्वं सूचितवानित्यलम्। परम्परयेति। एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्गस्यैकादेशशास्त्रनिमित्तकमिति भावः। प्रचुरः पाठ इति। ओषधीस्क्रुधीत्यादौ शसैकादेशे "कः करत्करतिकृति—" (पा०सू० ८।३।५०) इति षत्वनिवृत्तिश्च तत्फलमुक्तम्। मूले तु तस्य फलस्य च्छन्दसत्वात् "छन्दसिवा प्र—" (पा० सू० ८।३।४९) इत्यतः "इणः ष" (पा०सू० ८।३।३९) इत्यस्य निवृत्त्याऽदोषाच्च षष्ठ्यन्तमेव पठितमिति दिक्॥

प्रामादिकमिति। पदादित्वेन "सोऽपदादौ" (पा० सू० ८।३।३८) इत्यस्याप्राप्तिरिति भावः॥

---

तत्त्वाऽऽदर्शः

विकृतमनन्यवदि'तिन्यायेनो रइत्यत्रप्रत्ययत्वमादाय विसर्गस्य तत्सम्बन्धित्वम्, तथापि षत्वविधायकस्यासिद्धतयातत्रपरादिवद्भावाप्रवृत्तिः। नच स्थानिवत्त्वेन प्रत्यय सम्बन्धित्वमादाय न दोष इति वाच्यम्, अशास्त्रीयत्वेन तदतिदेशासंभवात्। नच 'सर्वे सर्वपदादेशा'इतिन्यायेना सित्यस्योरसित्यादेशस्वीकारेण स्थानिवत्त्वेन तत्त्वमिति शङ्क्यम्, तथासति मातृअसित्यस्यैव तत्स्थानिकत्वेन त्वदुक्तरीते रसंभवात्। अतएव प्रकृतसूत्रे 'उरण्रपर'इतिसूत्रेच भाष्ये 'पितुःकरोती'त्यादौ षत्वापादनं सङ्गच्छत इति वाच्यम्, कस्कादिगणे भ्रातुष्पुत्रशब्दस्य पाठेन त्रिपाद्यामपि 'अन्तादिवच्चेतिशास्त्रप्रवृत्तिज्ञापनद्वारा एकादेशशास्त्रनिमित्ता'दिति व्याख्यानं दृश्यते,

"द्वित्रिश्चतुरिति" ( पा० सू० ८।३।४३ ) इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्यात् चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते। कृत्वोऽर्थग्रहणं ज्ञापकम्। साहचर्यं न सर्वत्र व्यवस्थापकमिति। तेन "दीधीवेवीटाम्" ( पा० सू० १।१।६) इत्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणम्। उभयत्र विभाषा

---

शब्दरत्न

साहचर्यमिति। न च रामलक्ष्मणावित्यादौ दृष्टसाहचर्यसम्बन्धस्याभिधानियामकत्वं दृष्टम्। न चैषां क्वापि साहचर्यसम्बन्धो गृहीत इति कथमेतदिति वाच्यम्, "पञ्चम्यपाङ्परिभिः" ( पा० सू० २।३।१० ) इत्यनेन लक्षणादिद्योतकपरियोगे पञ्चमीशङ्कायां "यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने चायं खल्वपशब्दो ऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य कः सहायो भवितुमर्हति अन्यो वर्जनार्थात्। यथा ऽस्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः" इति "कर्मप्रवचनी-

---

तत्त्वाऽऽदर्शः

भवद् व्याख्याने तत्फलितार्थत्वम्प्रतीयत इति वाच्यम्, 'अमी'त्यत्र मीत्वार्थं, 'क्षीरपेणे'त्यत्र णत्वार्थं त्रिपाद्यामपि अन्तादिवद्भाव स्वीकारेण भाष्यस्य फलितार्थपरत्वे तात्पर्यादिति बोध्यम्।

साहचर्यादिति। अयंभावः, परासेनाजयतीत्यर्थके 'पराजयतिसेने'त्यत्र 'विपराभ्यांजे'रितिसूत्रेणात्मनेपदसंज्ञाप्रयुक्ततङादिप्रत्ययवारणाय भाष्यकृता 'सहचरितासहचरितयोः सहचरितस्यैवग्रहणमिति परिभाषास्त्रीकृता, तेन प्रकृते विशब्दसाहचर्येणोपसर्गस्यैव पराशब्दस्य सूत्रे ग्रहणेन न दोषः। साहचर्यस्य लोकेऽभिधानियामकत्व मित्येतन्मूलिकेयम्। उक्तञ्चाभियुक्तैः—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥ १॥
सामर्थ्यमौचितीदेशः कालोव्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृति हेतवः॥ २॥ इति

सहचरणञ्च सदृशयोरेवेति सहचरित शब्देन सादृश्यवानुच्यते, सदृशयोरेव सहविवक्षा तयोरेवच सह प्रयोग इत्युत्सर्गात्। ध्वनितञ्चेदम् कर्मप्रवचनीययुक्ते-

चेयम्। चतुरित्यस्य "इदुदुपधस्य-" ( पा० सू० ८।३।४१ ) इति प्राप्ते इतरयोस्त्वप्राप्ते। न च तयोरपि "इसुसोः सामर्थ्ये" ( पा० सू० ८।३।४४ ) इत्यनेन सिद्धिः शङ्क्या। इसः प्रत्ययस्य अर्थवतश्च तत्र ग्रहणात्। चतुष्कपाल इति। "इदुदुपधस्य" ( पा० सू० ८।३।४१ ) इति नित्यं षः। व्यपेक्षाविरहेऽपीति। तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः। व्यपेक्षायामिति। इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः।

---

शब्दरत्न

ययुक्ते" (पा०सू० २।३।८) इति सूत्रस्थभाष्येण सदृशानामेव प्रयोगे सहायत्वमित्यर्थस्य प्रतिपादनेनाक्षतेः परिभाषायां सहचरितशब्देन सदृशस्यैव ग्रहणं सहचरस्य भावः साहचर्यम्। सहचरणं च सदृशयोरेवेति साहचर्यशब्देन सादृश्यमुच्यते। सदृशयोरेव सहविवक्षा तयोरेव च सहप्रयोगः। रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकमिति दिक्। अर्थवतश्चेति। प्रतिपदोक्तस्य चेत्यपि बोद्ध्यम्। नित्यंष इति। भाष्यप्रामाण्येनात्राव्युत्पत्तिपक्षस्यैवाङ्गीकारेण व्युत्पत्तिपक्षे प्रत्ययसम्बन्धित्वात्कथं पत्वमिति न शङ्क्यम्, अत एव "चतुष्पाद्भयो ढञ्" (पा० सू० ४ ११३५) इत्यादिनिर्देशसङ्गतिः। इत्यर्थ इति। अत्रत्यन्तत्त्वं पूर्वं सूचितम्।

---

तत्त्वाऽऽदर्शः

द्वितीयेतिसूत्रे भाष्ये। तद् भाष्यञ्च शब्दरत्ने स्पष्टतयोल्लिखितम। द्विस्त्रिश्चतुरितिसूत्रे साहचर्येणैव कृत्वोर्थग्रहणसिद्धं तत्सामर्थ्यादेषाऽनित्या। अतएव च 'दीधीवेवीटा' मितिसूत्रे आगस्यैवेटो ग्रहणम्, अन्यथा 'दीधीङ्दीप्तिदेवनयोः' 'वेवीङ्वेतिनातुल्ये' इतिधातुसाहचर्यात्सूत्रे 'इट-किट-कटीगतौ' इतिधातुपाठ पठितस्यैवेटो ग्रहणं स्यात्, तथाच 'भविते' त्यादि लक्ष्ये गुणनिषेधो न स्यात्।

वस्तुतस्तु—परिभाषाऽनित्यत्व कल्पनापेक्षया यत्राप्रवृत्तिरिष्टा तत्रान्यधर्मेण सादृश्यं ग्राह्यम्। प्रकृतसूत्रे सुजन्तत्वेन साहचर्यग्रहणापत्त्या चतुष्पञ्चाशदित्यादिसुजर्थबहुव्रीहौ षत्वानापत्ति रतः कृत्वोर्थग्रहणङ्कर्तव्यमेव। नचानित्यत्वाभावे पूर्वोक्तदोषावसरः, 'दीधीवेवीटा'मितिसूत्रे हलनुबन्धकसाहचर्यादागमस्यैवेटोग्रहणं नतु धातोरिति ज्ञेयम्।

इसुसोः सामर्थ्ये इति। सामर्थ्यं द्विविधम्, व्यपेक्षारूपम्, एकार्थीभावरूप-

यत्तु पारायणिका आहुः—"कस्कादिषु सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्थत्वेऽपि षत्वार्थः" इति। तद्भाष्यविरोधादुपेक्ष्यम्। अयःसहितेति। न त्वयसो विकारः। "जानपद-" (पा० सू० ४।१।४२) इति ङीष्प्रसङ्गात्। अयस्कर्णीति। अय इव कर्णौ यस्याः। "नासिकोदरौष्ठ-" (पा० सू० ४।१।५५) इत्यादीना ङीष्।

"अधःशिरसी" (पा० सू० ८।३।४७) एतयोरिति। सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोद्धया। अधस्पदमिति। मयूरव्यंसकादित्वात्समासः। शिरस्पदमिति। षष्ठीसमासः।

॥ इति विसर्गसन्धिः ॥

---

शब्दरत्न

तद्भाष्येति। "अनुत्तरपदस्थस्य" इति किं, परमसर्पिः कुण्डिकेति, "नित्यं समासे—" (पा० सू० ८।३।४५) इति सूत्रस्थभाष्येत्यर्थः। आन्नन्तप्रयोगसूचितार्थं स्फुटप्रतिपत्तये आह—नत्वयस इत्यादि।

॥ इति विसर्गसन्धिः ॥

---

तत्त्वाऽऽदर्शः

ञ्वेति। पृथगर्थानां पदानामाकांक्षादिवशाद्यः परस्परसम्बन्धः साव्यपेक्षा, यथा 'राज्ञः पुरुषः'। स्वार्थपर्यवसायिनां पदानां मेकार्थोपस्थितिजनकत्वमेकार्थीभावत्वम्। यथा 'राजपुरुषः' अत्र सूत्रे व्यपेक्षारूपं सामर्थ्यं ग्राह्यम्। मानञ्चात्र 'नित्यंसमासे' इतिसूत्रे समासग्रहणमेव, अन्यथा सामर्थ्यग्रहणानुवर्तनादेकार्थीभावस्य समासरूपत्वेन समासलाभे तद् ग्रहणं व्यर्थमेव स्यादिति बोध्यम्। उक्तञ्च भाष्ये। 'पूर्वयोगे सामर्थ्यं व्यपेक्षारूपम् नचात्र व्यपेक्षासामर्थ्यमिति।

अयस्कर्णीति। नन्वत्र समासेनोत्तरपदाक्षेपात्कर्णीरूपमुत्तरपदं दुर्लभम् ङीषश्च विशिष्टाद्विधानात्। नच कर्णशब्दनिष्ठमुत्तरपदत्वं लिङ्गविशिष्टपरिभाषया कर्णीशब्दे सुलभ मितिवाच्यम्, यत्प्रकृतिकोलिङ्गबोधक स्तद्ग्रहणेन तद्विशिष्टस्य ग्रहणमिति हि तस्यार्थः। अन्यथाऽ यः परमकुम्भीत्यादावपि ङीष् विशिष्टस्यकुम्भशब्दत्वेन सत्वापत्तेरितिचेन्न, उत्तरपद इत्यस्यानाक्षेपएवायोग्यत्वादिति बोध्यम्।

॥ इति विसर्ग सन्धि प्रकरणम् ॥

# अथ स्वादिसन्धिः ।

"ससजुषो रुः" (पा० सू० ८।२।६६) पदस्येत्यनुवृत्तं ससजूभ्यां विशेष्यते, विशेषणेन तदन्तविधिः । न च सजूःशब्दांशे 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति निषेधः शङ्क्यः । तस्य प्रत्ययविधिविषयत्वात् । सान्तं सजुष्शब्दान्तं च यत्पदं तस्य रुः स्यात्, स चालोन्त्यस्य । एवं स्थिते फलितमाह—पदान्तस्येति । सजुष्शब्दस्येति । तदन्तस्य । पदस्ये-

---

शब्दरत्न

तस्य प्रत्ययविधौति । अत एव "येन विधिः—" (पा० सू० १।१।७२) इति सूत्रे भाष्ये प्रत्ययविधिभिन्ने "अप्तृन्" ( पा०सू० ६।४।११ ) इत्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्वसेत्युदाहृतं च सङ्गच्छते । अस्य "समासप्रत्ययविधौ —" इति निषेधानुवादकताया एव युक्तत्वाच्च । यत्त्वस्य ज्ञापकं "सपूर्वाच्च" ( पा०सू० ५।२।८७ ) इति सूत्रम् । अन्यथा "पूर्वादिनिः" ( पा०सू० ५।२।८६ ) इत्यत्र तदन्तविधिनैव सिद्धे किं तेन । तत् "प्रत्ययविधौ प्रतिषेधः" इत्यस्यैव ज्ञापकमिति वक्तुं शक्यम् । अत एव तदन्तविधिसूत्रभाष्ये "समास—"

---

तत्त्वाऽऽदर्शः

ससजुषोरुरिति । अत्र सूत्रे पदस्येत्यधिकारेण तदन्तविधिः । ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति ( पृ० २१ ) निषेधस्तु न शङ्क्यः 'स्वसा' 'परमस्वसा' इत्युदाहरणेन तदन्तविधिप्रतिपादनपरभाष्येणोक्तन्यायस्य प्रत्ययविधिविषयत्वात् । ग्रहणवत्प्रातिपदिकत्वञ्च—उगिद्ग्रहणभिन्नत्वे सति वर्णग्रहणभिन्नत्वे सति प्रत्ययग्रहणभिन्नत्वम् । तेनो'गितश्च' 'अत इञ्' 'यञिञोश्चे' त्यादौ नैतत्प्रवृत्तिः । वस्तुतस्तु—उगिद् ग्रहणभिन्नत्वमित्यस्य न फलम्, यतो हि अनुपसर्जनाधिकारेण स्त्रीप्रत्ययमात्रे तदन्तविधिज्ञापनसंभवात् । प्रत्ययविधिविषयत्वञ्च—प्रत्ययविशिष्टविधायकत्वे सति प्रत्ययाधिकारपठितत्वम् । वै० च स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व, स्वतादात्म्यैतदन्यतर सम्बन्धेन । एवञ्च 'नान्तादसंख्यादेर्मट्' इति प्रत्यय निष्ठोद्देश्यतानिरूपितविधेयताश्रयमडागमविधायकत्वात्प्रत्यय-

त्यर्थः। तेन सजुष इत्यादौ नातिप्रसङ्गः। न च सजूरित्यत्राव्याप्तिः, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिति वाच्यम्। "येन विधिः" इति सूत्रे शब्दकौस्तुभेऽस्य प्रत्याख्यातत्वात्। 'व्यपदेशिवद्भावोऽप्रातिपदिकेन'

शब्दरत्न

इत्यादिनिषेधवदस्य न कथनमिति बोद्धयम्। प्रत्याख्यातत्वादिति। अस्याः फलाभावात् "सूत्रान्ताट्ठक्" "दशान्ताड्डः" (पा० सू० ५।२।४५) इत्यादावन्तग्रहणसामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेरिति भावः। ननु "एकगोपूर्वात्—" (पा० सू० ५।२।११८) इत्यस्य केवलैकशब्दयोरप्रवृत्त्यर्थं सा ऽऽवश्यकी "सूत्रान्तात्—" (पा० सू० ५।२।४४) "दशान्तात्" (पा० सू० ५।२।४५) इत्यर्थं च। तत्रान्तग्रहणं तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति न तत्सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तिर्वक्तुं शक्या। न च भयाढ्यादाविव "सूत्रान्तात्—" इत्यादौ विशेषणविशेष्यभावव्यत्यासेन सिद्धे ऽन्तग्रहणसामर्थ्यं सूपपादमिति कौस्तुभोक्तरीत्या निर्वाहः। "समासप्रत्ययविधौ—" इत्यादीनां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकत्वस्य सत्त्वेन विपरीतस्य तस्य वक्तुमशक्यत्वात्। न चास्यां मानाभावः।

तत्त्वाऽऽदर्शः

विधिः। एवमेव 'गर्गादिभ्योयञ्' इत्यस्यापि तादात्म्येन प्रत्ययविशिष्टविधायकत्वात्प्रत्ययविधित्वमिति बोध्यम्।

नन्वेवं परमसजूरित्यत्र रुत्वेऽपि सजूरित्यत्र न स्यात्, नच व्यपदेशिवद्भावेन स्यादिति वाच्यम्, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' (प० ३२) इति तन्निषेधात्, इतिचेन्न, 'दशान्ताड्डः' 'सूत्रान्ताट्ठक्' इत्यादावन्तग्रहण सामर्थ्येन केवलैकदशन्शब्दादौ अप्रवृत्त्या फलाभावेन तदनङ्गीकारात्। नच प्रत्ययप्रतिषेधे जाग्रति तदन्तत्वाप्रवृत्तौ तत्रतत्रान्तग्रहणं सार्थकम्, एवञ्च तत्सामर्थ्यादिति वर्णनाऽसङ्गतेति वाच्यम्, मानाभावेन प्रकृते परिभाषाया अनाश्रयणात्। ननु 'पूर्वात्सपूर्वादिनि'-रित्येकयोगवक्तव्ये पृथग्योगकरणमस्यां ज्ञापकम्। अन्यथा व्यपदेशिवद्भावेन पूर्वस्यापि सपूर्वादित्यनेनैवसिद्धे पृथग्योगकरणं व्यर्थं स्यात्। नचानिष्टीति प्रयोगसिद्ध्यर्थं पृथग्योगकरणमिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येनानिष्टीतिप्रयोग-

इति; 'ग्रहणावता-' इति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति। "दिव उत्" ( पा० सू० ६।१।१३१ ) सूत्रे कैयटहरदत्ताभ्यामुक्तत्वाच्च। एवं च परमसजूर्भ्यामित्याद्यपि निर्बाधम्। एवं स्थिते इह सजुष्शब्देन तदन्तविधिर्नेति प्राचामुक्तिरापातत इत्यवधेयम्।

---

शब्दरत्न

"पूर्वात्सपूर्वादिनिः ( पा० सू० ५।२।८६ ) इत्येकयोगेन सिद्धे पृथग्योगकरणस्य मानत्वात्। न च "इष्टादिभ्य" ( पा० सू० ५।२।८८ ) इत्यत्रानुवृत्त्यर्थं तथा पाठ अतः एवानिष्टीत्यादिसिद्धिरिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात्। एकयोगेऽपि तत्रैव स्वरितत्वबलेन तावत एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च। व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारादेव "नान्तादसंख्यादेः—" ( पा०सू० ५।२।४९ ) इति चरितार्थम्। अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यरुचेराह—व्यपदेशिवद्भाव इत्यादि। दिव उत्सूत्रं यत्रेति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः। एवं च "दिव उत्" ( पा० सू० ६।१।१३१ ) इति सूत्रे कैयटेनोक्तमिति भावः। "येन विधिः—" ( पा० सू० १।१।७२ ) इति सूत्रे कैयटेन सूत्रोपात्तान्तादिति शब्दे विषयतास्येति वदता स्पष्टमेव प्रत्ययविधिविषयतोक्ता। "असमासे निष्कादिभ्यः" ( पा० सू० ५।१।२० ) इति सूत्रे भाष्ये कैयटे च स्पष्टमनयोः प्रत्ययविधिविषयतोक्तेति दिक्। इत्याद्यपीति। आदिना सजूर्भ्यामिति।

---

तत्त्वाऽऽदर्शः

स्यैवानिष्टत्वात्। किञ्च तत्रैव स्वरितत्वप्रतिज्ञया तावन्मात्रस्यैवानुवृत्तिर्वाच्येति चेन्न, सूत्रोपात्तान्तादिशब्दविषयताऽस्य न्यायस्येति वदता कैयटेन परिभाषायाः प्रत्ययविधिमात्रे स्वीकृतत्वात्।

यद्यपि कौस्तुभे दशान्तादित्यादावन्तग्रहण सामर्थ्येन केवले प्रवृत्त्यभावात्प्रयोजनाभावाच्च परिभाषा प्रत्याख्याता, तथापि अन्तग्रहणसार्थक्योत्पादनेन 'पञ्चम' इत्यादावसंख्यादेरिति निषेधाप्रवृत्त्यर्थकतया च प्रत्याख्यानमसङ्गतमेवेति बोध्यम्।

"भोभगो" (पा० सू० ८।३।१७) असन्धिः सौत्र इति। भगोअघोशब्द-योरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः। यदि तु भोस्, भगोस्, अघोस्, इति सान्तं रान्तं वा अनुकृत्य भो इत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यादपूर्वस्य रोश्चेति व्याख्यायते, तर्हि असन्धिर्न्याय्य एव। युक्तं चैतत्। अन्यथा विभोरिदं, सुप्रभा गौर्यस्य स सुप्रभगुस्तस्य सुप्रभगोरिदं रघोरिदमित्यत्रापि यत्वापत्तेः। भवति ह्ययं भोशब्दादिपूर्वो रुः। न चात्र भोशब्दादेर्लाक्षणिकत्वादग्रहणम्। "विभाषा भवद्भगवदघवतामोच्चावस्य" इति वार्तिकेन निष्पन्नानां भवदादिप्रकृतिकानां भोशब्दादीनामपि लाक्षणि-कत्वाविशेषात्। अनर्थकत्वमप्युभयत्र तुल्यम्। रुविशिष्टानामेवार्थवत्त्वात्।

ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्य स्थानि; तथा च 'अनल्विधौ" इति स्थानिवद्भावो न स्यादित्याशङ्क्याह—न ह्ययमिति। यथाऽग्रहीदित्यत्र "ग्रहोऽलिटि" (पा० सू० ७।२।३७) इति दीर्घस्य स्थानिवद्भावेनेट्त्वात् "इट ईटि" (पा० सू० ७।२।२८) इति प्रवर्तते। एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्ततेति भावः। तथा च स्थानिवत्सूत्रे भाष्यम्—"विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम" इति। इतोऽपि हेतो-र्धाःस्वङ्गेत्यादिपरिगणनमशुद्धमित्यवधेयम्। निपाता इति। "भोभगो–"

---

शब्दरत्न

ननु सान्तानुकरणे "विभाषा भवत्—" इति वार्तिकनिष्पन्नानां ग्रहणं न स्यादत आह—रान्तं वेति। कृतरुत्वानुकरणमित्यर्थः। अलोऽन्त्यस्येति। न च भो राजसे इत्यादौ "रो रि" इति लोपे कृते एकदेशविकृतन्यायेन भोःशब्दत्वादन्त्यस्यौ-कारस्य यत्वापत्तिरिति वाच्यम्। तेषामनभिधाने एषां रोरपूर्वस्य च रोरिति व्याख्या-नेनादोषो बोद्धयः। अत्र पक्षेऽघोशब्दान्तद्वंद्वे षष्ठ्याः सौत्रो लुक् बोद्धयः। अवधेयमिति। यदि "ग्रहोऽलिटि" (पा० सू० ८।२।२८) इति सूत्रे इटः स्थानि-

---

तत्त्वाऽऽदर्शः

भोभगोइति। अत्र भोभगो इत्योकारान्तानुकरणे सौत्रत्वान्नसन्धिः। रान्तानुकरणे यत्वयलोपयोः असन्धिः सम्यगेव। अत्र रान्तानुकरणमेव। ओकारान्तानुकरणे

( पा० सू० ८।३।१७ ) इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोद्धव्याः। तथा च "विभाषा भवद्भगवत्–" इति वार्तिकं नाश्रयणीयम्। अन्यथा

---

शब्दरत्न

त्वेन निर्देश इति तत्रानलाश्रयणं, प्रकृते तु विसर्गे रेफस्यैव स्थानित्वाद्वैषम्यं "अनल्विधौ" इत्यस्य स्थान्यल्वृत्तिधर्माश्रये स्थानिसम्बन्ध्यल्वृत्तिधर्माश्रये च नेत्यर्थस्तत्र स्थान्यल्रेफवृत्ति रुत्वं स्थानिवत्त्वेन दुर्लभमल्विधित्वात्स्पष्टं चेदं प्रकृतसूत्रे भाष्ये इत्युच्यते, तदा पयःस्वित्यत्र यत्ववारणायाशीति। तत्र हि "रोःसुपि" ( पा० सू० ८।३।१६ ) इति विसर्गः। नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरिति तत्र रुविशिष्टः स्थानीति तद्वृत्तिरुत्वस्य स्थानिवत्त्वेन लाभः सुकरः। यदि तु "रोः सुपि" ( पा० सू० ८।३।१६ ) इत्यत्रापि 'रः' इत्यनुवर्त्य रोः रेफस्यैव तेन विसर्गस्तदाऽशूग्रहणमुत्तरार्थं सत्स्पष्टार्थमिहैवकृतमित्यवधेयम्। तत्रेति। चादिष्वित्यर्थः। वार्त्तिकं नाश्रयणीयमिति। भो इत्यादिप्रयोगाणां निपातैरेव सिद्धेः। निपातानामपि सम्बोधनान्तभवादिसमानार्थकत्वात्सम्बोधनविभक्त्यन्तत्वेनामन्त्रितत्वमस्ति। "भवदादि" इत्यत्र भोःशब्दस्याप्यादिना ग्रहणात्तत्र भो इत्यादिसिद्धिरिति भावः। अन्यथा

---

तत्त्वाऽऽदर्शः

विभोरिदं, सुप्रभगोरिदं, रघोरिदमित्यत्र यत्वापत्तेः। अत्र चादेराकृतिगणत्वाद् भोस् भगोसिति निपातानङ्गीकृत्य विभाषाभवदिति वार्तिकं नाश्रयणीयम्। किञ्च निपातानामनङ्गीकारे वार्तिकनिष्पन्नानामेव ग्रहणे 'भोगङ्ग'इति प्रयोगासिद्धिः। तत्र भवच्छब्दान्ङीपि ङीपा व्यवधानाद्रुत्वौत्वे न स्याताम्। एवं 'भोविद्वद्वृन्द' 'भोहरिहरा'वित्यादावपि नपुंसकत्वेन पूर्वं सोर्लुकि नलुमतेति निषेधात्प्रत्ययलक्षणाभावेन सम्बुद्धिपरकत्वाभावात्सौ परत एव विधानेन च रुत्वौत्वे न स्याताम् इति वृत्ति हरदत्तादयः। दीक्षितमते चोभयोर्ग्रहणम्, निपाताङ्गीकारे उक्तप्रयोगाणां सिद्धिः। वार्तिकानङ्गीकारे भोसितिनिपातस्य सम्बोधनार्थत्वेनोक्तार्थानामिति न्यायात्संबोधनार्थक विभक्त्युत्पत्तेरभावेन 'हेभो'इति प्रयोगो न स्यात्। ननूक्तार्थानामिति न्यायस्य वाचक विषय एव प्रवृत्तिर्नतुद्योतकविषये, अतएव 'व्यतिलुनीत' इत्यत्र व्यतीत्यनेन कर्मव्यतीहारार्थकस्योक्तत्वेऽपि तद्योतकमात्मनेपदम्भवतीति विभक्तेः द्योतकत्वेन

पुल्लिङ्गैकवचनमात्रे भो हरे इत्यादिसिद्धावपि भो हरिहरौ, भो विद्वद्वृन्द, भो गङ्गे, इत्यादि न सिद्ध्येदिति भावः। एतच्च वृत्तिहरदत्तादिमतेनोक्तम्। भाष्यस्वरसरीत्या तु "विभाषा-" इत्यादिवार्तिकमारब्धव्यमेव। किंतु निपातोऽपि भोः शब्दोऽस्ति, तेन द्विवचनादौ स्त्रीनपुंसकयोश्च न दोषः। युक्ततरं चैतत्। हे भवन्नितिवत् हे भो इति प्रयोगस्यापीष्टत्वात्। तस्य च वार्तिकारम्भ एव सिद्धेः। "स्युः प्याट्पाडङ्गहैहेभो" इत्यमरोक्तानां सम्बोधनार्थानां निपातानां सह प्रयोगायोगात्। किं चात्रभवान् हरिस्तत्रभवान्

---

शब्दरत्न

साधारणानामभावे। भो विद्वद्वृदेति। नपुंसके सोर्लुका लुप्तत्वेन वार्तिकाप्रवृत्तेरिति भावः। भो गंगे इति। विभक्तौ लिङ्गविशिष्टाग्रहणान्ङीपा व्यवधानाद्भवतः सम्बुद्धिपरत्वाभावेनेति भावः। "स्युः प्याड्—" इत्यस्य निपातमात्राङ्गीकारे इत्यादिः। ननु निपातोऽप्ययं भवच्छब्दसमानार्थ एवेति हे भो इत्यस्य नासङ्गतिः। अत एव भाष्यकैयटयोर्वार्त्तिकसिद्धविभक्त्यन्तप्रतिरूपकमव्ययमित्युक्तं, विभक्त्यन्तप्रतिरूपकत्वं च शब्दतोऽर्थत इत्यन्यत्र स्पष्टम्। किं च व्यतिलुनीत इत्यादिवदेतयोरपि सहप्रयोग

---

तत्त्वाऽऽदर्शः

'हेभो'इति प्रयोगः स्यादितिचेन्न, 'इतराभ्योऽपिदृश्यन्त' इति सूत्रेण भवदादियोगसत्वे सर्वविभक्त्यन्तात् त्रतसोर्विधानाद्वार्तिकानङ्गीकारे 'तत्रभो' 'अत्रभो' इति प्रयोगासिद्धेः। किञ्च 'स्युःप्याट्पाडङ्गहैहेभोऽरेमीसम्बोधनार्थकाः इत्यमराद् भोसित्यस्य सम्बोधनार्थनिरूपितशक्तिसत्वेऽपि भगोसघोसित्यनयोः सम्बोधने शक्तौ प्रमाणाभावेन सम्बोधनार्थविभक्त्युत्पत्तेरभावादामन्त्रितसंज्ञायाअभावेन 'भगोतिष्ठसीत्यादौ 'आमन्त्रितम्पूर्वमविद्यमानवदिति सूत्रेणाविद्यमानवद्भावो न स्यात्। किञ्च 'आँभगोदेवदत्ते'त्यादौ भगो इत्यस्यामन्त्रितत्वाभावेनाविद्यमानवद्भावाप्राप्त्या 'आमएकान्तरितमामन्त्रितमनन्तिक'इति सूत्रेणानुदात्तनिषेधः स्यादितिवार्तिकमप्याश्रयणीयमेव। एवं 'भगोआगच्छ' 'धनेनभगोइत्यादौ द्वित्व पराङ्गवद्भावयोः सिद्धिरित्यपि बोध्यम्, अतएव भाष्यकारेण 'अव्ययमेषभोःशब्दो विभक्तिप्रतिरूपकमित्युक्तम्। तच्च शब्दतोऽर्थतश्च। एतेन भगो अघो शब्दयो र्न सम्बोधनार्थे शक्ति रिति सूचितम्।

इतिवत् तत्र भो इत्याद्यपि वार्तिके सत्येव सिद्ध्यति। "इतराभ्योऽपि दृश्यन्ते" (पा० सू० ५।३।१४) इति सर्वविभक्त्यन्तात्त्रतसोर्भवदादियोग एवेष्टत्वात्। किं चामन्त्रितत्वे पदात्परस्याष्टमिकनिघातः। "आमन्त्रितं पूर्वम्–" (पा० सू० ८।१।७२) इत्यविद्यमानवद्भावः। "आमएकान्तरम्–" (पा० सू० ८।१।५५) इति विधिः। "वाक्यादेरामन्त्रितस्य–" (पा० सू० ८।१।८) इति द्विर्भावः। "सुबामन्त्रित" (पा० सू० २।१।२) इति पराङ्गवद्भावश्चेत्यादि सर्वं सिद्ध्यति, न त्वन्यथेति दिक्। भगो, अघो इति निपातावपि यदि प्रामाणिकौ तर्हिस्तान्नाम। आमन्त्रितकार्यसिद्धिस्तु वार्तिकायत्तैवेति सुधीभिराकलनीयम्।

---

शब्दरत्न

सम्भव इत्यरुचेराह—किं चेति। पदात्परस्येति। इदं च न भोः शब्दे फलमुभयोरपि भोः शब्दयोः सम्बोधनप्रथमान्तत्वेनामन्त्रितत्वात्। किं तु तिष्ठसि भगो, तिष्ठसि अघो इत्यादौ भगवन्, अघवन् तिष्ठसीत्यर्थके "आमन्त्रितस्य—" इति निघातसिद्धिः। निपातयोस्तु तयोः सम्बोधने शक्तौ मानाभावेन सम्बोधनप्रथमान्तत्वाभावेनामन्त्रितत्वाभावात्। भगो तिष्ठसीत्यादौ अविद्यमानत्वम्। औँ भगो देवदत्तेत्यादौ द्विर्भावः। घनेन भगो इत्यादौ पराङ्गत्वमिति भावः। यदि प्रामाणिकाविति। यदीत्यनेनेदं सूचितं तौ न प्रामाणिकौ। अत एव भाष्ये "विभाषा भवत्—" इति व्याख्याय भो ब्राह्मणीत्यस्यैवासिद्धिमाशङ्क्याव्ययमेष भोःशब्दो विभक्तिप्रतिरूपकत्वादित्येवोक्तम्। एवं च

---

तत्त्वाऽऽदर्शः

अत्र सूत्रेऽश्ग्रहणाभावे 'देवाःसन्ती' त्यत्र यत्वस्यासिद्धत्वात्पूर्वं विसर्गेऽपि रुत्वस्याल्मात्रवृत्तित्वाभावेनानल्विधाविति निषेधा प्राप्त्या स्थानिवद्भावेन रुत्वाद्यत्वं स्यादि त्यश्ग्रहणमितिमनोरमाशयः।

वस्तुतस्तु 'भोभगो'इति सूत्रे भाष्ये अशिकिम्? वृक्षस्तत्र, प्लक्षस्तत्र, नैतदस्ति प्रयोजनम्, किन्तर्हि प्रयोजनम्, 'यशस्सु' पयस्सु इत्युक्तम्। अनल्विधाविति प्रतिषेधो भविष्यति, वृक्षस्तत्र; प्लक्षस्तत्र। मनोरमोक्तदिशाऽनल्विधावितिनिषेधाप्राप्ते

यत्तु वदन्ति—सकारान्तानेवैतान् निपातानास्थाय रुत्वौत्वे भाष्ये प्रत्याख्याते इति, तदतिरभसात्। स्यादेतत्। निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् प्रतिपदोक्तत्वात्। न तु सम्बुद्ध्यन्ताः लाक्षणिकत्वादिति चेन्मैवम्। "स्वरितेनाधिकारः" (पा० सू० १।३।११) इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात्। "भुवश्च महाव्याहृतेः" (पा० सू० ८।२।७१) इति सूत्रे महाव्याहृतिग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थमिति हरदत्ताद्युक्तेश्च। न चैवमपि प्रभोरित्यादावतिव्याप्तिः। परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात्।

---

शब्दरत्न

भर्गो हरिहरावित्याद्यसाध्वेव। तदतिरभसादिति। "भोभगो—" (पा० सू० ८।३।१७) "मतुवसो—" (पा०सू० ८।३।१) इति सूत्रयोरस्यार्थस्य भाष्येऽस्पृष्टत्वादिति भावः। उभयग्रहणादिति। वार्त्तिकबोधितसाधुत्वानामपि "कुलटाया वा" इत्यादौ कार्यान्तरबोधनाय सूत्रकृताऽनुवादस्य करणादिति भावः। हरदत्तेति। एवं चानित्यत्वात्तदप्रवृत्तौ उभयोर्ग्रहणसिद्धिरिति भावः। "विभाषा भवत्—" इतिवार्तिके भो ब्राह्मणा भो ब्राह्मणी इत्यसिद्ध्याशङ्कायामव्ययमेष भोः शब्द इति सिद्धान्तेनो-

---

तत्त्वाऽऽदर्शः

स्तद्भाष्यान्यथानुपपत्या ऽल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके कार्येऽनाल्विधाविति प्रतिषेधो भविष्यतीत्यवश्यं स्वीकरणीयत्वेन 'देवाःसन्ती त्यत्राल्त्वव्याप्यरेफत्वावच्छिन्नस्थानितासमानाधिकरणरुत्वनिमित्तके यत्वे कर्तव्ये ऽनल्विधाविति निषेधान्न यत्वप्राप्तिरिति नेदमश्ग्रहणस्य फलम्।

किन्तु 'यशस्सु' 'पयस्सु' इत्यत्र नियमशास्त्राणां विधिमुखेन प्रवृत्ति रिति सिद्धान्तितत्वेन 'खरवसानयोर्विसर्जनीय' इत्यस्य सप्तमीबहुवचनावयवभिन्ने खरि परतः रेफस्य विसर्गो भवती त्यर्थेन प्रकृते खरवसानयो रितिविसर्गाप्राप्त्या 'रोःसुपी' त्यनेनैव विसर्गो भवतीति विसर्गनिष्ठादेशता निरूपित स्थानितावच्छेदकं रुत्वन्तदल्व-

"व्योर्लघु" ( पा० सू० ८।३।१८ ) लघुप्रयत्नतरः । स चान्तरतम्याद्धस्य वो यस्य य इत्याह—वयाविति ।

"ओतो गार्ग्यस्य" ( पा० सू० ८।३।२० ) ओकारादिति । यत्त्वोकारान्तादङ्गादिति प्राचा व्याख्यातं, तन्न । अङ्गस्याप्रकृतत्वात् । असम्भवाच्च । न ह्युदाहरणेष्वोकारान्तमङ्गमस्ति ।

"हलि सर्वेषाम्" ( पा० सू० ८।३।२२ ) यकारस्येति । वकारस्तु नानुवर्तते । भोभगोअघोऽपूर्वस्यासम्भवात् । अपूर्वस्तु यद्यपि सम्भवति वृत्तव् करोति तथापि तत्र लोपाप्रसङ्गः । अशीत्यनुवर्त्याशा हलो विशेषणात् वृत्तव् हसतीत्यादि तु अनभिधानादसाध्वित्याहुः । गव्यमित्यत्र तु पदा-

---

शब्दरत्न

भयोरत्र ग्रहणलाभादिति बोद्धयम् । परस्परसाहचर्येणेति । तेन चार्थवतामेव ग्रहणमिति भावः । अर्थवत्परिभाषयेत्यपि बोद्धयम् । अन्येषाम्—अनर्थकानां । सान्तरान्तान्यतरानुकरणमिति पक्षे प्रसिद्धया भोइत्यादिपूर्वकरेफान्तानामेवार्थवतां ग्रहणस्य न्याय्यतया भोइत्याद्योकारान्तानुकरणपक्षेऽपि वार्त्तिकनिष्पन्नानां निपातानां चैकदेशभूतभोशब्दादीनामेव ग्रहणमिति भावः । अत्रेदन्तत्त्वं—रान्तानामेवानुकरणं सूत्रे सन्ध्यभावो न्याय्य एवेति भाष्यस्वरसः ।

लघूच्चारणतरो । लघुतरोच्चारणः ।

हलो विशेषणादिति । स्पष्टं भाष्ये । इत्याहुरिति । हरदत्तादयः । वकारलोपे ततस्तदर्थानवगतेरित्यर्थः । एवं च करोत्यादिपरेऽपि तत एव लोपोन भविष्यतीत्यशा हलो विशेषणं व्यर्थमिति सूचितम् । भाष्यमपि तदेकदेश्युक्तिरेव । "न पदान्ताः परेऽणः सन्ति" इति "लण्" सूत्रस्थभाष्यविरोधाच्च ।

---

तत्त्वाऽऽदर्शः

व्याप्यमिति 'अनल्विधाविति'निषेधाप्राप्त्या स्थानिवद्भावेन कृत्वाद्यत्वं स्यादित्यश्ग्रहणम् ।

यदि तु रोःसुपीत्यत्रापि रोः रेफस्यैव विसर्ग स्तदाऽश्ग्रहणमुत्तरार्थं सत्स्पष्टार्थमिहैव कृतमित्यवधेयम् ( जिज्ञासुभिःविस्तरस्तुशेखरेद्रष्टव्य इति शम् ।

न्तत्वं नास्ति। गव्यूतिरित्यत्र तु वकारप्रश्लेषान्न वलोप इत्युक्तम्। ननु देवा नम्या इत्यादौ "लोपोव्योः–" ( पा० सू० ६।१।७६ ) इत्येव सिद्धम्। नैवम्। तं प्रति यत्वस्यासिद्धत्वात्। देवा यान्तीत्यत्र वल्परत्वाभावाच्च। अहोरात्र इति। "रात्राह्नाहाः–" ( पा० सू० २।४।२९ ) इति पुंस्त्वम्। अहरादीनामिति। उभयत्राप्यादिशब्दः प्रकारे। तेन "स्वर्चक्षो रथिनः सत्यशुष्मः"। "विप्रः कविः काव्येन स्वर्चनो" इत्यादि ग्राह्यम्।

वृढो वृढ इति। उदित्त्वेन वेट्कत्वात् "यस्य विभाषा" ( पा० सू० ७।१।१५ ) इति निष्ठायां नेट्। ढत्वधत्वष्टुत्वढलोपाः।

यत्तु प्राचा प्रत्युदाहृतं दृढ इति। तन्न। तत्र ढलोपस्यैवाभावात्। तथा हि–"दृढः स्थूलबलयोः" ( पा० सू० ७।२।२० ) इति सूत्रेण दृंहेर्नकार-हकारयोर्लोपः, तकारस्य ढत्वं च निपात्यते। नत्वसिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः "दादेर्धातोः–" ( पा० सू० ८।२।३२ ) इति घत्वेन बाधात्। न च इडभावो ढत्वं च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम्। तथा सति परिदृढय्येत्यत्र "ल्यपि लघुपूर्वात्" ( पा० सू० ६।४।५६ ) इति णेरयादेशो न स्यात्। पारिदृढीकन्येत्यत्र "अणिञोः।" (पा०सू० ४।१।७८) इति ष्यङ् च स्यात्। ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वादिति भाष्ये स्थितम्।

यत्तु प्राचा व्याख्यातं दृंहेरेवेदं निपातनं, दृह वृद्धाविति तु प्रकृत्यन्तरम्। तस्य निष्ठायामागमशास्त्रस्यानित्यत्वादिडभावे "वा द्रुह–" ( पा० सू० ८।२।३३ ) इत्यत्र "वा" इति योगविभागात् पक्षे घत्वाभावे ढलोपे च प्रत्युदाहरणमिदं द्रष्टव्यमिति। तन्न। उभयोरपि निपातनाभ्युपगमात्। तदाह वामनः—अथ दृहिः प्रकृत्यन्तरमस्ति तस्याप्येतन्निपातनं नलोप-

---

शब्दरत्न

इडभावो ढत्वं चेति। चेन नलोपसङ्ग्रहः। ढलोप इति। "ढो ढे लोप" ( पा० सू० ८।३।१३ ) इत्येतद्दृष्ट्या ष्टुत्वं तु नासिद्धं सामर्थ्यादिति भावः। भाष्ये स्थितमिति। "दृढः स्थूल—" ( पा०सू० ७।२।२० ) इति सूत्रे शेषः।

द्रष्टव्यमितीति। ष्यङि णेरयाभावे चेष्टापत्तिरिति भावः। उभयोरपीति। त्वद-वलम्बभूतेन वृत्तिकृतेति शेषः। तदाह—वामन इति। अत्रार्थचवीजं तु दृंहेर्नकार-

वर्जमिति। युक्तं चैतत्। अन्यथा हि अस्माद् णेरय् न स्यात्, ण्यङ् च स्यात्'।

उत्वमेवेति। सिद्धासिद्धयोरतुल्यबलत्वेन "विप्रतिषेधे परम्-" (पा० सू० १।४।२) इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः। तदुक्तम्-"पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इति। एतेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे इत्यादि व्याख्यातम्।

सूत्रे सु इति पृथक्पदं लुप्तषष्ठीकमित्याह-एतत्तदोर्यः सुरिति। एतत्तदर्थगतसंख्याभिधायी यः सुस्तस्येत्यर्थः। एतत्तदोर्विहित इति व्याख्याने तु

---

शब्दरत्न

हकारलोपार्थमिति भाष्यविरोधः। अनिदितो दहेस्तु दहितमित्येवेष्यत इति कैयटविरोधश्चेति। किं च प्रसादोक्तरीत्या दहेरपि इडभावढत्वयोः सिद्धाविण्निषेधप्रकरणे दढ इति निपातनस्य व्यर्थत्वमित्यलम्।

अभावादुत्तरस्येति। आहार्याभावारोपादित्यर्थः।

---

तत्त्वाऽऽदर्श

एतत्तदोरिति। एतत्तदोरित्यस्य एतत्तच्छब्दप्रकृतिक सोर्लोपो भवतीत्यर्थे परमसद्ददातीत्यत्र सोः तच्छब्दप्रकृतिकत्वाभावाल्लोपो न स्यादतः एतत्तच्छब्दार्थगत संख्याभिधायी यः सुस्तस्य लोपो भवतीत्यर्थः स्वीकार्यः। तथाच निरुक्त स्थले सोः एतत्तच्छब्दार्थगत संख्याभिधायित्वान्न दोषः। नन्वेवमपि ब्राह्मणः स इत्यत्र ब्राह्मणशब्दात्परस्य सोः तच्छब्दार्थगतसंख्याभिधायित्वाल्लोपः स्यादिति वाच्यम्, एतत्तच्छब्दार्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकोयः सुस्तस्य लोप इत्यर्थेनादोषात्। प्रकृतेब्राह्मणप्रकृतिक सोः ब्राह्मणत्वावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वम्, नतु तच्छब्दार्थतावच्छेदक बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वमिति न दोष इतिभावः।

परमस ददाति परसैष ददातीत्यादौ न स्यात्। अर्थद्वारकसम्बन्धाश्रयणे लिङ्गं तु "अनञ्समासे" इति बोद्धव्यम्। अकोः किमिति। साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः। एषक इति। "अकोः" इति प्रतिषेध एव "तन्मध्यपतिततस्तद्ग्रहणेन गृह्यते" इति परिभाषां ज्ञापयतीति भावः।

बहुलग्रहणेति। अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति। सास्मा अरम्। सः अस्मै इति च्छेदः।

इति स्वादिसन्धिः।

---

शब्दरत्न

लिङ्गमिति। विहितविशेषणे तद्वैयर्थ्यं स्पष्टमेवेति भावः।

सास्मा अरमिति। सोस्मा अरमिति सन्धावपि पादपूर्त्तेः। न च "प्रकृत्यान्तः पादम्—" (पा० सू० ६।१।११५) इतिपूर्वरूपस्याभावेन न पादपूर्त्तिः। "सोऽय-मागात्" इत्यादाविवात्रापि प्रातिशाख्येन सिद्धेः। एवञ्चावधारणपरतया न व्याख्येयम्। "सोऽहमाजन्म—"इत्यादौ बहुलग्रहणेन क्वचिदप्रवृत्त्याऽपि सिद्धेरिति तात्पर्यम्।

इति पञ्चसन्धिप्रकरणम्।

---

तत्त्वाऽऽदर्शः

नचैवमपि 'तत्कल्पम्' 'तच्चर' इत्यत्रकल्पप् चरट् प्रत्ययार्थयोः ईषदसमाप्ति भूतपूर्वयोः प्रकृत्यर्थोपाधित्वेन बुद्धिविषयता वच्छेदकत्वोपलक्षित धर्मावच्छिन्न धर्मिता निरूपित संख्यानिष्ठ प्रकारता प्रयोजकत्वात्सुलोपः स्यादिति वाच्यम्, एतत्तद्विशिष्टो यः सुस्तस्य लोप इत्यर्थेनादोषात्। वै० च एतत्तच्छब्दार्थतावच्छेदकावच्छिन्न धर्मिता निरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्व, स्वाव्यवहितोत्तरत्वैतदुभयसम्बन्धेन। तच्चर इत्यादौ चरडादिप्रत्ययस्य व्यवधानात्स्वाव्यवहितोत्तरत्वाभावेन न दोषः। ब्राह्मणः स इत्यत्र चोभयसम्बन्धाभावेन तच्छब्दवैशिष्ट्याभावान्न दोष इति बोध्यम्।

इति श्रौतस्मार्तकर्मानुष्ठानपरायणवेदमूर्ति श्रीपं० जोशीत्युपनामक गणपति-जनुषाव्याकरणाचार्य, श्रीदिवाकर शास्त्रिणा विरचिते तत्वाऽऽदर्शे पञ्चसन्धिप्रकरणं समाप्तम्।

# व्या० शा० (१) खण्डे मनोरमा-शब्दरत्नयोः प्रष्टव्य प्रश्नरूपाणि

१—हयवरट् सूत्रे हकारोपदेशस्य किम्प्रयोजनम्, अम् प्रत्याहारे प्रयोजनमस्ति नवेति सुस्पष्टमुपपादयत। उ० त० पृ० २

२—वर्णोपदेशे द्विः हकारोपादानं सार्थकं नवेति लिखत। उ० त० पृ० ४–११

३—सम्पूर्ण सूत्रावृत्त्यतिरिक्तान् अन्योन्याश्रयपरिहारोपायान् प्रदर्श्य हलन्त्यमित्यस्यावृत्तिर्मनोरमोक्तरीत्यासमर्थनीया। उ० त० पृ० ६

४—क्षुमतिचेतिणत्वं 'चित्रगवीणा'मिति ग्रन्थस्य किन्तात्पर्यम्। उ० त० पृ० ८

५—आदिरन्त्येनेति सूत्रे स्वशब्दानुवृत्तौ प्राच्यनव्ययोः कीदृशोमतभेदः कश्च सिद्धान्तः इति स्पष्टमुपपादयत। उ० त० पृ० १४

६—उपदेश शब्दस्य भावसाधनत्व-करणसाधनत्वयोः साधक बाधक प्रमाणान्युपन्यस्य भाष्यानुसारी निर्दुष्टस्तदर्थोवर्णनीयः। उ० त० पृ० १६

७—योगपक्षे उपदेशता प्रयोजकेत्यादि स्वपरग्रन्थविरोधो न संज्ञापक्षे, अत्र का वाचोयुक्तिः। उ० त० पृ० २१

८—'उपदेशेऽजनुनासिकइत्' इति सूत्रे उपदेशग्रहणफलं ब्रूत। उ० त० पृ० २३

९—रप्रत्याहारविषये प्राङ् नव्ययोः कतरन्मतं युक्तमिति सुस्पष्टं वर्णयत। उ० त० पृ० २४

१०—तस्यादित इति सूत्रे ह्रस्वग्रहणस्याविवक्षितत्वे प्राङ्नव्ययोः को विशेषः, किञ्च युक्तम्। उ० त० पृ० २७

११—'तुल्यास्य प्रयत्नं सवर्णम्' इति सूत्रस्य परिष्कृतार्थो वर्णनीयः। उ० त० पृ० ३१

१२—पूर्वत्रासिद्धमित्यस्याधिकारत्वास्वीकारे यद् दूषणं शब्दरत्नकृता दत्तं तदुपपाद्य, कार्यासिद्धत्व शास्त्रासिद्धत्वयोर्गुणदोषौ विविच्य वाच्यौ। उ० त० पृ० ३३

१३—अणुदित्सूत्रे परेण णकारेणाण् प्रत्याहार ग्रहणे सोपपत्तिकं प्रमाणमुपपादयत। उ० त० पृ० ४१

१४–भूवादयोधातव इति सूत्रे सादृश्यं केन रूपेण ग्राह्यमिति विविच्य, याः पश्यसी-
त्यादौ कथं नाकारलोप इति सुस्पष्टं लिखत। उ० त० पृ० ४३

१५–भूवादय इति सूत्रे भ्वादिग्रहणं शब्दरत्नोक्तिगर्भं सफलयत। उ० त० पृ० ४५

१६–इकोगुणवृद्धीति सूत्रे तच्छेषपक्षे किन्दूषणं कथञ्चतदुद्धार इति विविच्य, एतत्-
परिभाषायाः फलं तदर्थश्च वर्णनीयः। उ० त० पृ० ४८

१७–तस्मिन्निति सूत्रार्थे प्राचीन नवीन मते उपपाद्य तयोर्युक्तायुक्तत्वे
निरूप्येताम्। उ० त० पृ० ५४

१८–तस्मादित्युत्तरस्यादेरिति न सूत्रितम्, अत्र मनोरमाग्रन्थे शब्दरत्नकृता को
विशेषोदर्शित इति प्रकाशनीयम्। उ० त० पृ० ५६

१९–प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढलक्षणाङ्गीकारस्य प्रमाणफले सप्रपञ्च-
मुपवर्ण्येताम्। उ० त० पृ० ६१

२०–धात्वङ्गेति प्राचीनोक्तं दूषयता स्थानिवत्सूत्रार्थो नव्यप्राच्यमतानुसारेण
संलेख्यः, किंच तत्राल्विधित्वम्। उ० त० पृ० ६६

२१–पूर्वविधावित्यत्र पञ्चमीसमासफलान्यन्यथोपपाद्य रत्नोक्तदिशा तत्फलं समर्थ्य,
तदसाधारणं फलमस्ति नवेति विशदमुच्यताम्। उ० त० पृ० ७२

२२–न पदान्तेति सूत्रे विधिशब्दो भावसाधनः कर्मसाधनो वा, किञ्च लक्ष्यसिद्धौ
तयोर्वैषम्यमित्युच्यताम्। उ० त० पृ० ७६

२३–न पदान्त सूत्रे 'नच प्रत्ययलक्षणम्' इत्यादि मनोरमा ग्रन्थस्य शब्दरत्नकृता
स्थानिवत्सूत्र परत्वेन व्याख्यानं केनाभिप्रायेण कृतमिति विशदमुपपादनीयम्।
उ० त० पृ० ७७

२४–मूले सवर्णानुस्वारयोर्दत्तमुदाहरणं व्याख्यातृपद्धत्या सारुचिनिर्देशमुपपाद्य
युक्तं निर्दोषञ्चोदाहरणं प्रदर्शनीयम्। उ० त० पृ० ८०

२५–यणः प्रतिषेधो वाच्यः इति वार्तिकस्य विषये कः फलभेदः प्राप्नोति कतरश्च
तदुद्धारप्रकार इति निरूप्यताम्। उ० त० पृ० ८५

२६–सुध्युपास्य इत्यत्र नवरूपाणीत्यभिधायाग्रे किमभिहितम्, पुनर्द्वित्वं कथमशुद्धम्;
तत्र नवीन प्राचीन मते संलिख। उ० त० पृ० ८८

२७–लक्ष्येलक्षणमित्यत्र प्रमाणमुपदर्श्य विकारकृत लक्ष्यभेदानाश्रयणे ज्ञापक मुपवर्ण्यं, तल्लक्ष्यत्वं निर्दोषं परिष्कर्तव्यम्। उ० त० पृ० ८९

२८–एकः पूर्वपरयोरिति सूत्रकारीय पूर्वपक्ष सिद्धान्तयोः कथं लक्ष्येलक्षण-न्यायसिद्धिः किम्परिनिष्ठितत्वम्, किञ्च समानाङ्गत्वम्। उ० त० पृ० ९१-९५

२९–धात्रंश इत्यत्र रेफस्य द्वित्वनिषेधचिन्तायां मूलव्याख्ययोः को मतभेदः, कस्य च मतं युक्तमिति सयुक्तिकमुपपादनीयम्। उ० त० पृ० ९६

३०–एत्येधत्यूठ्स्विति सूत्रे एचीत्यस्य कुत्रान्वयः, कुत्र च नेति मतभेद प्रदर्शन पुरःसरमविरोधी कश्चन सिद्धान्तः समर्थनीयः। उ० त० पृ० १९३

३१–अर्थवद् ग्रहणपरिभाषायां राजेः पृथक् भ्राजिग्रहणस्य ज्ञापकत्वं कथं मनोरमा कृतोपपादितं, कश्च तत्रास्वरसः शब्दरत्न कृतोपदर्शित इति सुष्ठुनि-रूप्यताम्। उ० त० पृ० १०७

३२–अन्तादिवच्चेति सूत्रस्य स्थानिवत् सूत्रेण गतार्थत्वेऽल्विध्यर्थत्वाभावे का वाचो युक्तिरुपदर्शिता शब्दरत्नकृतेति निरूप्यताम्। उ० त० पृ० ११०

३३–रूपग्रहणं चिन्त्यप्रयोजनमुपपाद्य शब्दरत्नकृता यदुक्तं तल्लिख। उ० त० पृ० ११२

३४–अवङ स्फोटायनस्येति सूत्रे एङोऽनुवृत्तौ प्रतिपदोक्तग्रहणे च प्रमाण-मुच्यताम्। उ० त० पृ० ११९

३५–सम्बुद्धौ शाकल्यस्येति सूत्रे सम्बुद्धिग्रहणस्य किं प्रयोजनं मूले उक्तम्, शब्दरत्ने च किमुक्तन्तद् युक्तं नवेति विविच्यताम्। उ० त० पृ० १२६

३६–परमदण्डिनावित्यत्र ङमुड्भावो मूलकृता कथमुक्तः, टीकाकृता च यदित्वित्या-दिना किमुक्तं, किञ्च कार्यित्वनिवेशेऽनन्यथासिद्धमुदाहरणमस्ति नवेति विविच्यताम्। उ० त० पृ० १४४

३७–ङमुटः परादित्वमावश्यकं नवेति सुस्पष्टमुपवर्ण्यताम्। उ० त० पृ० १४२

३८–खयाञादेशेनेत्यस्य किन्तात्पर्यं, कस्यैतद्रूपं भाष्यकारैः कृतम्, कानिच ख्याञा-देश प्रयोजनानि भाष्ये प्रोक्तानि। उ० त० पृ० १४८

३९–'विसर्जनीयस्यसोऽशर्परे' इति न्यासे दोषमुद्भाव्य कविभिः कृतमित्यत्र षत्वं वारणीयम्। उ० त० पृ० १५३

४०-दुइदुपधस्येति सूत्रेऽप्रत्ययस्येति सामानाधिकरण्येनान्वय उत वैयधिकरण्येनेति विविच्य, विसर्गविधिस्तु पुनरित्यादौचरितार्थ इति ग्रन्थं व्याख्यावसरे 'अग्निः' पुनरित्यनयोर्भेद प्रतिपादनपरोरत्नग्रन्थो निपुणं पूर्वपूर्वग्रन्थेऽरुचिं प्रदर्शयता भवतोपपादनीयः । उ० त० पृ० १५४

४१-मातुः कार्यमित्यत्र कथं न षत्वम् । उ० त० पृ० १५७

४२-साहचर्य परिभाषायां कृत्वोर्थग्रहणं ज्ञापकं नवेतिविविच्यताम् । उ०त०पृ० १६०

४३-व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषायाः शब्दकौस्तुभदर्शित प्रत्याख्यान प्रकार मुपपाद्य निराक्रियताम् । उ० त० पृ० १६३

४४-भोभगो इति सूत्रे निपातानां ग्रहणं, वार्तिक निष्पन्नानां वा ? किंच तेषाम्प्रयोजने वैषम्यमिति स्पष्टमुच्यताम् । उ० त० पृ० १६६

४५-भोभगो इति सूत्रेऽश् ग्रहणं सार्थकं नवेति । उ० त० पृ० १६९

४६-ढ्रलोप इति सूत्रेऽणः किम् ? ढढ इति प्राचीनोक्तं खण्डय । उ०त०पृ० १७२

४७-एतत्तदोरिति सूत्रार्थोदोषरहित उपवर्ण्यताम् । उ० त० पृ० १७३

॥ इति श्रीमनोरमा-शब्दरत्नयोः पञ्चसन्ध्यन्तभागे प्रश्नरूपाणि समाप्तानि ॥

